ओ३म्

# नाट्यसौष्ठवम्

डा० कान्तिकिशोर भरतिया




शिक्षक-प्रकाशन
प्रेम नगर, कानपुर-१
(भारत)

## डा० भरतियामहाभागस्य प्रणीतयः

१– वेद भारती
२– आर्षकाव्य एवं प्रकृति
३– संस्कृतनाटककार
४– वैदिकस्वराज्यशासनपद्धति
५– वैदेशिकाः गीर्वाण्युपासकाः
६– संस्कृते नाट्यसौष्ठवम्
७– वेद और खादी
८– वेद और गौ

ओ३म्

अंशुमद्ग्रन्थमालायाः दशमं पुष्पम्-



# संस्कृते नाट्यसौष्ठवम्






डा० कान्तिकिशोर भरतिया एम०ए०, पी०एच-डी०
प्राध्यापकः (संस्कृत विभाग)
डी० ए० वी० महाविद्यालय
कर्णपुरम्






शिक्षक-प्रकाशन
प्रेम नगर, कानपुर-१
(भारत)

# प्रस्तावना

चक्षु:श्रोत्रेन्द्रियाभ्यां सर्वजनान् रञ्जयितुं शिक्षयितुं वापि सक्षममिदं दृश्यकाव्यं नाटकं काव्यस्य प्रयोजनकारणानि प्रकाशयितुं सर्वतोभावेन प्रभवति नाऽत्र सन्देहः। काव्यप्रकाशकारः आचार्यमम्मटमहाभागः काव्यस्य प्रयोजन-कारणान्येवमुपवर्णयति :—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे च॥
शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे॥ का० प्र० १/२-३



गद्यपद्यनाट्यादीनि नानाकाव्यरूपाणि, येषां हि प्रयोजनहेतू प्रावर्णयदाचार्यः। यत्र नाट्यमेव तद्यदेतस्य प्रकाशने सर्वोत्कृष्टां चमत्कृतियुतां विधां धारयति, नाट्यशास्त्रस्येयं परमगुरुतामयी सुष्ठुता। एनामेव संलक्ष्य प्रबन्धेऽस्मिन् "संस्कृते नाट्यसौष्ठवम्" मया समुपवर्णितम्।

स्वल्पायुषां बालानाम्, विद्यालये महाविद्यालये विश्वविद्यालये वाऽध्येतुकामानाम्, मननशीलानां महाविदुषामपि च कृते संस्कृतसाहित्यस्य महदुपयोगिग्रन्थानां प्रकाशने दत्तावधानाः शिक्षकप्रकाशनप्रबन्धकाः एवाऽस्य प्रबन्धस्याऽपि प्रकाशकाः। धन्यवादार्हास्ते आचार्यप्रकाशमित्रशास्त्रिप्रभृतयो महाभागाः ये सन्त्यस्य प्रकाशनस्य सूत्रधाराः। ये चाऽल्पेनैव कालेन विविधान् ग्रन्थान् प्रकाश्य स्वशिक्षणधर्मण सह प्रकाशनकार्येणाऽपि देववाण्याः महतीं सेवायोजनां प्रास्तुवन्। यत्र ह्यनेके ममाऽन्तेवासिनः कर्मनिरताः संस्कृतसेवां विदधति-इति मे हर्षसमुच्चयः। सर्वं एव ते धन्यवादार्हाः, यतो हि तेषां जिज्ञासाभाव एवाऽत्र मम प्रेरकः समभवत्।

वैशिष्ट्येनाऽत्र स्मरणीयः मदन्तेवासिनः सम्प्रति च सह प्रवक्तृपदभाजः श्रीशिवबालकद्विवेदीमहाभागस्य परमः सहयोगः। नाऽपि च विस्मरणीयाः श्रीमती उमा अवस्थी श्री ओमशंकर मिश्र सुधीर अवस्थी नामानो मदन्तेवासिनः, ये हि यथाशक्ति पुस्तकस्याऽस्य संग्रथने साहाय्यं विहितवन्तः। सर्वेऽप्येते धन्याः आशीर्वादार्हाश्च, इति।

संस्कृतदिवसः, रक्षाबन्धनम्
सं० २०३७ वि० (२६-८-१९८०)

कान्तिकिशोर भरतिया

# प्रकाशकीयम्

संस्कृतभाषा सर्वभाषाणां जननी, तत्साहित्यञ्चातिविपुलं सुसमृद्धं सर्वविद्याप्रकाशकञ्च वर्तते। यथा चोक्तम् "नेत्थं हि दृश्यते ज्ञानं यन्न भवेदत्र संस्कृते।" अतएव हि विश्वस्मिन्नस्मिन् भूमण्डले संस्कृतभाषायाः तत्साहित्यस्य च सुमहद्गौरवं सर्वोपरि प्रतिभासते। सर्वत्रैव हि नानादेशवासिनः विविधभाषाभाषिणः सन्तोऽपि गवेषणातत्पराः बुधजनाः संस्कृतभाषाऽध्येतुकामाः एव संलक्ष्यन्ते। महता च प्रयत्नेन तेऽधीयतेऽपि संस्कृतवाङ्मयम्।

"काव्येषु नाटकं रम्यम्" कथञ्च तत्सुसाध्यम्, कथं वा तद्भवेत् सर्वजनहिताय, केन वा विधिना दृष्टिगोचरं सत् तत्सम्पद्येत शिवेतरक्षतये" इत्येव सर्वं देवगिरा प्रतिपादयितुकामः नाट्यशास्त्रमर्माऽभिज्ञः डाक्टरपदभाक् श्रीकान्तिकिशोरभरतियामहाभागः प्रबन्धमिमं प्राबध्नात्। इति सुमहते प्रयासाय धन्यतां दधात्ययं सुधीः।

यं च प्रकाश्य परमाह्लादमनुभवति शिक्षकप्रकाशनसमितिः।

संस्कृत-दिवसः<br>श्रावणपौर्णमासी<br>सं० २०१७ वि०

उमा अवस्थी शास्त्री एम० ए०<br>प्रकाशन मन्त्री<br>शिक्षक प्रकाशन समिति

ओ३म्




## नाट्यं भावानुकीर्त्तनम्

संस्कृतभाषा तत्साहित्यं च सकलेऽस्मिन् संसारेऽस्माकं देश-स्याऽपूर्वो निधिर्वर्तते । अनादिकालादेवाऽस्माकं राष्ट्रियजीवने एतयोरननुभूतपूर्व एव प्रभावः सन्दृश्यते । स्वदेशीयाऽऽर्यावर्तीय-साहित्यं संस्कृतिश्चैतेनैव पूर्णतया परिव्याप्यते । देववाण्याः परम-गौरवास्पदे भाजने स्थितः सोऽद्यापि भारतीयजनान्तःकरणेषु श्रद्धा-भक्ती संचारयति । एतादृशीं दैवीं वाचं मृतभाषेति कथनं कीदृशो ऽन्यायः वर्तते इति स्वयमेव विचारणीयम् ।

अधुनाऽपि संस्कृतभाषा ग्रीकलैटिनाऽपेक्षया जगति बहु प्रचलिता एव विद्यते । आङ्गलभाषाऽपेक्षया इयं भाषाऽस्मानार्यान् अधि-कमेव स्पृशति । दैनिकधार्मिकजीवने संहिताब्राह्मणारण्यकोपनि-षदात्मकस्य वैदिकसाहित्यस्य, रामायणमहाभारतनाम्ना प्रख्यात-स्याऽऽर्षसाहित्यस्य च समग्रेऽस्मिन् (भूमण्डले विशिष्टतयाऽस्माकं) देशे भारतेऽतीव महत्वं वर्तते । अस्माकं सर्वेऽपि संस्काराः गर्भा-धानादन्त्येष्टिपर्यन्ताः अन्ये च धार्मिककल्पाः अनया संस्कृतभाषया एव सम्पाद्यन्ते । अक्षरज्ञानरहितो भारतस्य ग्रामवासी बन्धुरपि संस्कृतस्य कतिपयान् श्लोकान् जानात्येव । धार्मिकभावनया पूर्णत्वादेवेयं "सुरभारती, देववाणी" इति वा नाम्ना मनीषिभिः सम्प्रयुज्यते । आचार्यो दण्डी महाभागः अस्याः एव भाषाया महत्वं प्रतिपादयन् स्वकाव्यादर्शग्रन्थे लिलेख —

संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ।
भाषासु मधुरा मुख्या दिव्या गीर्वाणभारती ॥

अस्या देववाण्याः संस्कृतस्य सार्वभौमप्रचारे सुमहत्कारणमस्य काव्यमयस्य साहित्यस्य सुष्ठुत्वं सर्वग्राह्यत्वं च वर्त्तते । काव्येनैवजनः स्वान्तःकरणेऽनुपमं रसानन्दमनुभवति । स काव्यानन्दः ब्रह्मानन्दादपि प्रशस्यतरो भवति यतो हि अयं काव्यानन्दः ब्रह्मानन्दवत् संसारमायेन्द्रजालनिरपेक्षो न भवति ।

काव्यस्य द्वौ भेदौ श्रव्यदृश्यात्मकौ । श्रुत्वा बोधगम्यं काव्यं श्रव्यकाव्यमित्युच्यते—तस्य च गद्य-पद्य -चम्पूनामतः त्रयो भेदाः भवन्ति । अथ च यद् उभयथा दृष्ट्वा श्रुत्वा चाऽपि बोधगम्यं भवेत् तत्काव्यं दृश्यकाव्यमित्युच्यते । तस्य दृश्यस्य च रूपकोपरूपकनामतः भेदौ द्वौ भवतः । रूपकस्य च दश, अथोपरूपकस्य चाऽष्टादश भेदाः भवन्ति ।

श्रव्यकाव्यस्य रसमनुभवितुं कर्णेन्द्रियमेव माध्यमं भवति । अथ दृश्यकाव्यस्य रसाऽनुभवने कर्णेन्द्रियं श्रवणेन्द्रियं चेमे उभे अपीन्द्रिये माध्यमत्वं भजतः । इत्थं दृश्यकाव्ये इन्द्रियद्वयसाहाय्येन वयं द्विगुणतरं रसमनुभवामः । श्रव्यकाव्यरसस्याऽऽस्वादने काव्यकोविदाः रसमर्मज्ञाः विद्वांसः जना एव समर्थाः भवन्ति, यदा हि रूपक (दृश्य) काव्यसमालोचने—बालाः वृद्धाः, शिक्षिताः अशिक्षिताः वा सर्वेऽपि जनाः सामान्यरूपेणैव रसमाग्रहीतुं सक्षमाः सम्भवन्ति । सूक्ष्माऽपेक्षया स्थूलः, अमूर्त्ताऽपेक्षया मूर्त्तो वा पदार्थः सदैवाऽधिकः प्रभावी भवति । लिखितं-शब्दरूपेण वर्णितं कियदपि

विस्तृतं सुनिरूपितं वा भवेत् चित्रमयस्य वर्णनस्य समक्षं कदापि स्थातुं नैव समर्थं सम्भवति । नेत्रश्रवणात्मकज्ञानेन्द्रियाभ्यां माध्यमेन रसानुभूतिकारणात् दृश्यकाव्यरूपकाणां प्रमुखा विशिष्टता वर्तते—यत् तान्येवं सन्त्यपि बाह्यजगता पूर्णतया व्याप्तानि काव्यस्याऽऽत्मनः रसस्य मूलश्रोतांस्यपि सन्ति ।

इह जगति यानि हि नानाविधकृत्यानि सम्पाद्यन्ते तैः निम्नमध्यमोत्तमफललाभः मर्यादानुसारं प्राप्यत एव, किन्तु अनेन दृश्यकाव्येन सर्व एव जनाः स्वयोग्यताऽनुसारम् उत्तमं रसमेवाऽऽप्नुवन्ति । आदौ सृष्ट्यां यदा ब्रह्मनिरीक्षणे महामुनिः भरतो नाट्यस्य प्रबन्धं चकार, दैत्याः कार्यमिदं देवपक्षीयममन्यन्त । तदेतन्नाट्यविनाशार्थं ते विघ्नान् समुत्पादयितुमपि समुद्यताः अभवन् । तत्कालीनं च घटनाचक्रं निरूपयन्नाह महामान्यो भरतमुनिः स्वनाट्यशास्त्रे—

विरूपाक्षवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ।
अलं वो मन्युना दैत्याः विषादस्त्यज्यतामयम् ॥
भवतां देवतानां च शुभाऽशुभविकल्पकः ।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः ॥
नैकान्ततोऽत्र भवतां देवानां चापि भावनम् ।
त्रैलोकस्याऽस्य सर्वस्य नाट्यं भावानुकीर्त्तनम् ॥

नाट्य शास्त्र—१।१०५-१०७ ॥

विरूपाक्षेण वर्णितं समग्रं वृत्तमाकर्ण्य ब्रह्मा दैत्यान् प्रत्येवमाह—अधुना क्रोधस्य विषादस्य मन्योः वा प्रयोजनं नास्ति । चिन्तया

मन्युना वाऽलम् । स्वकर्त्तव्ये तिष्ठत । मया विरचितो नाट्यवेदः भवतां सुराऽसुराणां कृते सामान्यरूपेण शुभाऽशुभनिर्धारकः विद्यते । अनेन कर्मणा उभयोः कर्माणि भावाश्च स्वत एव प्रकाशमागमिष्यन्ति । अस्मिन् नाट्यकर्मणि दैत्यानां देवानां वा केषांचित् पक्षविशेषस्थानां वा भावाः न भविष्यन्ति अपितु अस्मिन् नाट्यवेदे त्रैलोक्यस्थानां हि समेषां भावानामनुकरणं भविष्यति ।

यद्यपि हि गीतिकाव्येष्वपि भावनानां प्राबल्यं सन्दृश्यते तथापि तेषु सूक्ष्ममानवीयकरणस्याऽभाव एव भवति । दशरूपककारधनञ्जयस्य मताऽनुसारम्—

अवस्थाऽनुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
रूपकं तत्समारोपात् दशधैव रसाश्रयम् ।।

दशरूपक—१।७।।

काव्योपनिवद्धधीरोदात्ताद्यवस्थाऽनुसारश्चतुर्विधाऽभिनयेन तादात्म्यापत्तिर्नाट्यम् । तदेव नाट्य दृश्यमानतया रूपकमित्युच्यते नीलादिरूपवत्, नटे रामाद्यवस्थारोपेण वर्तमानत्वात्, रूपकं मुखचन्द्रादिवत् इत्येकस्मिन्नर्थे प्रवर्त्तमानस्य शब्दत्रयस्य इन्द्रः, पुरन्दरः, शक्रः इतिवत् प्रवृत्तिनिमित्तभेदो दर्शितः । "रसानाश्रित्य वर्तमानं दशप्रकारम्" एवेत्यवधारणं शुद्धाऽभिप्रायेण नाटिकायाः संकीर्णत्वेन लक्ष्यमाणत्वात् ।

संस्कृतरूपकाणां सार्वभौमसुखान्तभावत्वं प्रमुखं वैशिष्ट्यं वर्तते । भासरचितौ कर्णभारोरुभंगौ विहाय संस्कृतस्य समस्त नाटकसाहित्यं सुखान्तमेव वर्तते । पाश्चात्ययोरोपदेशीयनाटकसाहित्या-

ऽपेक्षया संस्कृतनाटकसाहित्यस्यैषा ऽतिमहत्ती विशिष्टता वर्तते। याञ्च कीथमुग्धानल (मेकडानल) प्रभृतयः पाश्चात्यगीर्वाण्युपासकाः संस्कृतसाहित्यस्य महतीं न्यूनतां मन्यते स्म। तेषां मतानुसारं कामेडी (सुखान्त) ग्रन्थेषु पाठकाः विभिन्नमनोवृत्तीनां सामाजिक-दौर्बल्यानां च चित्रं पश्यन्ति ज्ञानं वा प्राप्नुवन्ति, किन्तु ट्रेजेडी-(दुःखान्त) ग्रन्थेषु तु जीवनस्य गाम्भीर्यं स्वत एव प्रकटीभवति। अत एवैषा काव्यप्रवृत्तिः जीवनस्य गाम्भीर्यपक्षं स्पृशन् हृदयस्य मूलकेन्द्रमपि स्पृशति।

अस्मिन् सन्दर्भे देशस्याऽस्माकं प्राचीनाचार्याणां मतमपि विवेचनीयम्। तेषां सुनिश्चितं मतमिद यत् 'दुःखान्तग्रन्थाः नूनमेव निम्नतराः, यतो हि तत्र पाठकानां दर्शकानां वा समक्षं क्रौर्यपाशवाधर्मविधायकानि चित्राणि स्वतन्त्ररूपेण प्रस्तूयन्ते। वधप्रहरण-पराणि दृश्यानि दर्शकपाठकानामन्तःकरणेषु हिंसानिर्दयताकुटिलतादिभावान् जनयितुं प्रभवन्ति, ये हि भावाः सामाजिकराष्ट्रोन्नतौ व्यवधानं जनयन्तः राष्ट्रस्य अधःपतनहेतवश्च भवन्ति। एतानेव विचारान् संलक्ष्याऽस्माकं देशस्य प्राचीनैः आचार्यैः सकलमेव नाटकसाहित्यं सुखान्तमेव कल्पितम्।

'सुखान्तदुःखान्तयोरुभयोरयं भेदः नितान्तं कृत्रिमः महत्वशून्य एव वर्तते" इति मन्यते अन्ये केचन विद्वांसः। ते कथयन्ति यत् "रूपके भिन्नभिन्नस्थलेषु सुखान्तदुःखान्तवृत्तीनामावश्यकमतानुसारं समावेशः क्रियते।

सुखान्तदुःखान्ते (कामेडी-ट्रेजेडी) नाटके आशावादि-

निराशावादीति वा नाम्ना वर्गीक्रियेते । अनेन प्रकारेणाशावादि नाटकं पूर्णतः सुखान्तम्, अथ निराशावादि नाटकं पूर्णतः दुःखान्तं वा भवितुमर्हति । सुखान्तः ग्रन्थः परिवर्त्तनशीलस्य संसारस्य रूपं पाठकानां समक्षं यथार्थतः प्रस्तौति । सुखाय कल्पितेषु रूपकेषु नाट्यग्रन्थेषु वा मध्ये-मध्ये दुःखमयवृत्तीनां समावेशः परमावश्यकः भवति । पाठकाः जगतः क्लेशानपि स्वसमक्षे कल्पन्ते । यथा महताम् सम्पूर्णनिशायाः अनन्तरमेव सुरम्यः सुप्रभातो भवति तद्वदेव कष्टापन्नदशायाः भयंकरपरिस्थितेर्वाऽनन्तरमेव भोक्ताऽनुभवति परमं सुखम् । नाटकस्य नियताप्तावुपसंहृतौ यदा सुखस्य पर्यवसानं भवति तस्य सिद्धान्तस्य प्रत्यक्षोदाहरणं पाठकानां समक्षं प्रस्तूयते—

महाकवेः कालिदासस्याऽमरकृतिः "अभिज्ञानशाकुन्तलम्" नाम नाटकं संस्कृतनाट्यसाहित्यस्य सर्वोत्कृष्टं नाटकं वर्तते । तस्मिन्नाटके सिद्धान्तस्याऽस्य स्पष्टरूपेण निरूपणं भवति । पञ्चमेऽङ्के कविना दैवस्य दुर्विपाकक्रौरगतीनां सागर एव पाठकानां समक्षे प्रस्तुतः । यदा सर्वलक्षणसम्पन्नः नरेशो दुष्यन्तः आपन्नसत्वां स्वभार्यां शकुन्तलां स्वीकर्तुमपि नोद्यतः भवति, तदा हतभाग्यायाः अबलायाः तस्याः कीदृशी करुणापूर्णा दशा जातेति सम्यगवगम्यत एव बुधैः । एतादृशीं परिस्थितिम् अतिक्रम्य यदा कविः तयोः शकुन्तलादुष्यन्तयोः सुखसङ्गमं दर्शकानां पाठकानां वा समक्षे प्रस्तुतं करोति तदा करुणार्द्रचेतसः परमदुःखाभिभूताः अपि दर्शकाः पाठकाः वा अनिर्वचनीयं सुखं लभन्ते ।

एवमेव गीर्वाणीसाहित्यस्यान्यग्रन्थानामवलोकनेऽपि प्रकटी-

भवति यत् प्रायशः संस्कृतभाषाकविभिः अयं सिद्धान्तः स्वीकृतः। कतिपयेषु नाटकेषु मृत्योः वधस्य वोल्लेखः नूनमेवाऽभवत्-तेषु वेणीसंहारोरुभंगौ प्रसिद्धौ। उभयत्र कथानके साम्यमेव। वेणीसंहारे प्रतिनायकस्य दुर्योधनस्य मृत्योः सूचनां कञ्चुकी सम्राजं युधिष्ठिर निवेदयति, यदा च "उरुभङ्गे" भीमः रङ्गमञ्च एव गदाप्रहारैर्दुर्योधनं निहन्ति। वेणीसंहारनाटके सूचनामात्रेण सिद्धान्तस्य रक्षा भवति—यदा च 'उरुभंगे' अपवाद एव।

वर्तमाने युगे महामहोपाध्यायेन श्रीमत्पण्डितमथुराप्रसाददीक्षितेन भारतविजयनामकं प्रसिद्धं नाटकं विरचितम्। इतिहासकाराणां मतेनाऽऽङ्गलदेशीयवणिग्जनानां भारतदेशे प्रवेशादारभ्य तिलकगान्धिप्रभृतीनां नेतॄणां सुमहत्प्रयत्नैः स्वराज्याऽवाप्तिपर्यन्तं सर्वासां घटनानामेतस्मिन् नाटके समावेशो विहितः। यद्यपि हि सप्तत्रिंशदधिकोनविंशति (१९३७) तमे ईस्वीयाब्दे ग्रन्थस्यैतस्य स्वराज्याऽवाप्तिः कल्पनाप्रसूतैवाऽऽसीत्। नाटकेऽस्मिन् भारतीयस्वातन्त्र्यप्राप्त्युत्सुकैरनेकैः वीरैः कपटमूर्तीनामाङ्गलप्रभूणां कृता हत्याऽपि रंगशीर्षे प्रस्तुता भवति। यत्र हि स्वाधीनतासङ्ग्रामे स्वपूर्वजानां योगदानं तैश्चाऽनुभूतप्रभूतकष्टयातनां च संस्मृत्य विदेशीयानां शासकानां निधनप्रस्तुतिः भारतीयानां हृदि परमसुखानुभूतिहेतुरेव भवति।

एवं नाटककारेण मथुराप्रसाददीक्षितमहोदयेन गीर्वाणीसंस्कृतकाव्येषु नाटकक्षेत्रे नव्यां विधां प्रारभमाणेनाऽपि भरतमुनेः सिद्धान्ताऽभिप्रायौ नाऽतिक्रान्तौ।

संस्कृतसाहित्यस्य सर्वाङ्गेषु रसस्य पर्याप्तः प्रभावो भवति। आचार्यविश्वनाथेन "वाक्यं रसात्मकं काव्यम्" इति निगदितम्। काव्यस्याऽऽत्मा रस एव विद्यते। तदभावे काव्यसर्जनं निरर्थकमेव विद्यते। विश्वनाथस्य काव्यसम्बन्धे एतस्य विचारस्य तदनन्तरवर्त्तिनः विद्वांसः तीव्रतरामालोचनां चक्रुः येनाऽलम्।" रस एव रूपकनाटकसाहित्यस्य सर्वप्रधानं तत्वमिति स्वीकरणे नाऽस्माकमन्येषां वा सुधियां काचन विप्रतिपत्तिर्विमतिर्वा।

नाट्यशास्त्रस्याऽऽद्याचार्यो भरतमुनिः सन्दर्भेऽस्मिन्नेवं निरूपयति–"नहि रसादृते कश्चिदर्थः प्रवर्तते" इति। नूनमेव रसेन विना रूपकेषु न कोऽपि नाट्यार्थो प्रवर्तते, अतः रस एव काव्यस्य मूलं स्रोतः, सर्वाधारः, समग्रा परिणतिश्चेति। स्वकीये प्रसिद्धे दशरूपकग्रन्थे रूपकेषु दृश्यकाव्येषु वा रसवर्जम् व्युत्पत्तिमात्रं फलमनुधित्सून् अज्ञान् उपहसन्नेवमाह भरतः–

आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रम्फलमल्पबुद्धिः।
योऽपीतिहासादिवदाह साधुः तस्मै नमः स्वादुपराङ्मुखाय॥

(दशरूपक १/६)

रसरत्नप्रदीपिकाग्रन्थे अल्लराजेन ब्रह्मानन्दे लौकिकपदार्थजन्ये सर्वोत्तमे सुखे च रसः मध्यवर्त्तीत्येव वर्णितः। नाटकसाहित्येषु रसस्य एतादृशोच्चस्थानविषये नैसर्गिकी जिज्ञासा प्रजायते। रसस्य प्रतिभयैव कवयः पाठकानां कृते स्वकृतीः सुप्रभावयुताःमहत्वपूर्णाःकर्तुं प्रभवन्ति। येन मनोरञ्जनानामुत्कृष्टो निधिः स्वतः एवोत्पद्यते। साहित्यमर्मज्ञानामन्तः करणेषु च हेम-

रेखा स्वयमेव दृश्यते ।

आङ्गलदेशीयपरमविदुषां मुग्धानल (मेकडानल) महोदयानां प्रधानशिष्यस्य कीथमहाभागस्य मतमिदं विद्यते यत् संस्कृतनाटकसाहित्येषु रसनिरूपणमपूर्ववैशिष्ट्ययुतं वर्तते—येन सकलं विश्वजनीनं साहित्यं प्रभावितम् अभवत् । नाटकसाहित्येषु रूपकेषु वा पाठकाः काव्यरसस्याऽलौकिकं सुखमनुभवन्त्येव । अतीतस्य सर्वमान्यान् ऐतिहासिकान् वा पात्रान् चक्षुषा प्रत्यक्षीकृत्याऽद्भुतं विशिष्टाऽऽनन्दमनुभवन्त्येव ते ।

यूनानोऽप्यतिप्राचीनो देशः । तस्य सभ्यतासंस्कृतिविद्यानां प्रचारः प्राचीनकालादेव सम्प्रवर्तते । अरस्तूः तद्देशीयः प्रसिद्धः मनीषी आसीत् । तस्य मतम् 'नाटकं तद्विशिष्टं काव्यं वर्तते, यस्मिन् कार्यपरिस्थितीनां विशिष्टाऽनुकरणं गम्भीरतयैव क्रियते । तस्य काव्यनिरूपणमपि पूर्णं चित्ताकर्षकं च भवति । भाषासु च प्रसन्नतोत्पादकान्युपकरणानि यथायोग्यं समाविशन्ति ।

कविः स्वनाट्यकृतिषु करुणाभयोल्लासजनकान् भावान् परिष्करोति । अरस्तूमहोदयस्यैतत्परिभाषाऽनुसारं नाटकेषु निम्नांकितानि तत्वानि परमावश्यकानि भवन्ति— १. गाम्भीर्यम्, २. स्वतःपूर्णता, ३. समलङ्कृता भाषा, ४. निरूपणस्थाने अभिनयात्मकता, ५. करुणाभयोत्पादकाः घटनाः, ६. भावानां परिष्कारः ।

अरस्तूमहोदयस्योक्तविश्लेषितमतेन दुःखान्त (ट्रेजडी)-नाटकमेव नाटकस्य सर्वोत्कृष्टः प्रतिनिधिः वर्तते । यूनानदेशे

अरस्तूकाले तद्देशीया नाट्यकला स्वशैशवे एव आसीत्, अत एव महामान्यः एष मनीषी एवंविधान् भ्रान्तविचारान् प्रकटयामास। यथाऽस्मिन् प्रसंगे पुरा संस्कृतरूपकाणां सार्वभौमसिद्धान्तविषये निगदितं यत्—सुखान्तेनैव दर्शकपाठकानामन्तःकरणेषु विशिष्टाः मनोवैज्ञानिकाः भावाः जायन्ते यैः समाजस्य देशस्य जगतश्च क्रमशः विकासो जायते। एवमरस्तूमत सर्वथा भ्रामकमेव विद्यते।

रूपकेषु दर्शकपाठकाः स्वान्तःकरणेषु न केवलं रसानन्देन मनोरञ्जनमात्रमेवाकलयन्ति, अपितु दर्शनेन पठनेन वा दिव्यां कान्तिमोजश्चाऽनुभवन्ति। रंगेषु नाटकं किं करोतीति सन्दर्भे नाट्यशास्त्रस्याद्याऽऽचार्याणां भरतमुनीनामेवमभिमतं विद्यते—

क्वचिद्धर्मः क्वचित् क्रीडा क्वचिदर्थः क्वचिद्छ्रमः।
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः॥

दिव्येऽस्मिन् नाट्यशास्त्रे रसज्ञाः क्वचित्तु धर्मशास्त्राऽनुकूलां मर्यादाम् अनुमन्यन्ते, अन्यत्र हि मनोविनोदनकानि दृश्याणि प्रेक्ष्याऽनुभूय च क्रीडनकमेव मन्यन्ते। राजनीतेः अर्थनीतेश्च व्यवहाराः अस्य प्रयोगेणैव व्यक्तीभवन्ति। अन्येषु स्थलेषु परिश्रमस्य हास्यस्य, युद्धस्य, संकुलस्य वा चित्रणं भवति। कामस्य हत्यायाः वा कीदृशः प्रभावः इत्यपि च सम्यग् ज्ञानं भवति।

धर्मो धर्मप्रवृत्तानां कामः कामार्थसेविनाम्।
निग्रहः दुर्विनीतानां मतानां दमनक्रिया॥

प्रेक्षकाः यदा स्वाऽलौकिकपूर्वपुरुषाणामलौकिकं चाक्षुषमनुभवन्ति, तदा प्रतिकूलप्रवृत्तीनां जनानां मानसिकोद्वेगः शान्तिमधि-

गच्छति । कर्त्तव्यनिष्ठाः जनाश्च स्वधर्मकर्त्तव्यपालने प्रेरणामेव गृह्णन्ति । 'मत्ताः धृष्टाः कामुकाः वा जनाः स्वकृत्यस्य कथंकारं फलमाप्नुवन्ति–'इति च दृष्ट्वा दर्शकाः पाठकाः वा अपि स्वकर्त्तव्याऽकर्त्तव्य च परिचिन्वन्ति ।

क्लीबानां धाष्ट्र्यजननमुत्साहः शूरमानिनाम् ।
अबोधानां विबोधश्च वैदग्ध्यं विदुषामपि ॥

अस्य विलोकनेन पुरुषत्वरहितानां नपुंसकानां वा जनानामन्तःकरणेष्वपि दिव्यमोजः प्रजायते । वीराः धीराश्च धैर्यमननुभूतपूर्वमनुभवन्ति । अल्पज्ञाः विवेकं विद्वांसश्च प्रागल्भ्यं वैदग्ध्यं प्राप्नुवन्ति ।

ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च ।
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥

अनेनैव ईश्वराः ऐश्वर्यसम्पन्नाः स्वामिनः भोगविलासम्, दुःखार्दिताः दुःखिताः वा धैर्यं च गृह्णन्ति । अर्थाश्रिताः धनपरायणाः अर्थम्, उद्विग्नचेतसः भयभीताः अपि अनेन धैर्यं प्राप्नुवन्ति ।

नानाभावोपसम्पन्नं नानाऽवस्थान्तरात्मकम् ।
लोकवृत्ताऽनुकरणं नाट्यमेतन्मया कृतम् ॥

प्रेक्षागारे नाट्यमवलोक्य प्रेक्षकाणां मनस्सु हर्षोद्वेगभयकरुणादिविविधप्रकारकाः भावाः प्रबुध्यन्ते । जीवने कथं कस्यचिद् दशाविशेषस्य पक्षान्तरस्य वा प्रादुर्भावः परिवर्तनं वा भवतीत्यपि च सुस्पष्टं सम्पद्यते । लोकव्यवहारस्याऽप्यस्मिन् प्रत्यक्षं प्रत्यक्षीकरणं जायते ।

उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ।
हितोपदेशजननं धृतिक्रीडासुखादिकृत् ॥

मनुष्येषु नीचोत्तममध्यमाः विभिन्नकोटयः भवन्ति । ते स्वकर्मा-ऽनुगुणं कीदृशीः दशाः अवस्थाः वाऽनुभवन्ति—इति च नाट्यस्याऽव-लोकनेन स्पष्ट भवति । एवं तद् धैर्यक्रीडासुखानां हेतुः सत् प्रेक्ष-कानां कृते महदुपयोगिनं शिक्षाप्रदमुपदेशं करोति ।

एतद्रसेषु भावेषु सर्वकर्मक्रियास्वथ ।
सर्वोपदेशजननं नाट्यमेतद् भविष्यति ॥

एतन्नाट्य रसभावक्रियाणामीदृग्रूपां भवति यत्ततस्तत्र प्रेक्षकाः बहुविधाः शिक्षाः गृह्णन्ति । नाट्यशास्त्रस्य कतिपयेषु संस्करणेष्वयं श्लोकोऽपि दृश्यन्ते

दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम् ।
विश्रान्तिजननं नाट्यं तस्मादेतन्मया कृतम् ॥

मया रचितमिदं नाटकं प्रेक्ष्य दुःखिताः परिश्रमक्लिन्नाः शोक-सन्तप्ताः पीडिताः जनाः वाऽपि यथोचितं विश्रामं चाक्षुषं सुखं वा समवाप्स्यन्ति ।

धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद् भविष्यति ॥

इदं नाट्यं धर्माणां मर्यादायुतकर्मणां यशसश्च वर्द्धकः वर्तते । अस्य सेवनेन शुभसंकल्पेषु प्रचोदयित्री धीः स्वत एव प्रजायते, यत्सा-हाय्येन सकललोकमंगलकारकमुपदेशं गृह्णाति मानवः ।

न तच्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म यन्नाट्येऽस्मिन्न दृश्यते ॥

नाट्येऽस्मिन् श्रवणेन मननेन वोपार्जिताः नानाशिल्पविद्याः कलाः योगाः प्रयोगाश्च स्वत एव प्रवर्त्तन्ते । यथा आहुः—नाट्यं लोकस्याऽनुकरणमेव विद्यते । साहित्यं, वास्तुकला, संगीतनृत्यं. विविधान्यन्यानि च ज्ञानविज्ञानस्वरूपाणि सर्वाणि रूपकेऽस्मिन् यथास्थानं प्रयुज्यन्ते ।

सर्वशास्त्राणि शिल्पानि कर्माणि विविधानि च ।
अस्मिन्नाट्ये समेतानि तस्मादेतन्मया कृतम् ॥

मया (भरतमुनिना) विचार्य नाट्ये सर्वाणि शास्त्राणि शिल्पानि समष्टिहितसाधकानि विविधकर्माणि चैकत्र एव सन्निहितानि लोकहिताय । क्वचित् पाण्डुलिपिष्वयमपि श्लोकः पठ्यते—

तन्नाऽत्र मन्युः कर्तव्यो भवद्भिरमरान् प्रति ।
सप्तद्वीपाऽनुकरणं नाट्यमेतद् भविष्यति ॥
येनाऽनुकरणं नाट्यमेतत्तद् यन्मया कृतम् ॥

हे दैत्याः ! भवन्तः अस्मिन् विषये देवान् अमरान् प्रति मन्यु न कुर्वन्तु, यतो हि यन्नाट्यं मया प्रस्तुतम् तद् 'भूः भुवः स्वः महः जनः तपः सत्यम्' इति सप्तानां लोकानामनुकरणमात्रमेव भविष्यति ।

देवानामसुराणां च राज्ञामथ कुटुम्बिनाम् ।
ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् ॥

देवाः राक्षसाः मानवाः, राजानः, गृहस्थाः, विबुधाः सर्वोत्कृष्टाः

मनीषिणो वा प्रेक्षागारे नाट्यमिदं प्रेक्ष्य स्वयोग्यताऽनुसारं शिक्षामेव गृह्णन्ति, स्वस्वचरित्रं च शोधयन्ति ।

योऽयं स्वभावो लोकस्य दुःखसुखसमन्वित. ।
सोऽङ्गाऽभिनयोपेतो नाट्यमित्यभिधीयते ॥

संसारेऽस्मिन् विविधप्राणिनां हर्षोद्वेगसूचकाः विविधाश्चेष्टाः दृश्यन्ते । अङ्गानां साहाय्येन तासां प्रेक्षागारे रंगोपरि प्रस्तुतीकरणमेव नाट्यमित्यभिधीयते ।

वेदविद्येतिहासानामाख्यानपरिकल्पनम् ।
विनोदकरणं लोके नाट्यमेतद् भविष्यति ॥

भरतनाट्यशास्त्रम्,–१/१०९-१२०

नाट्यमहिमसन्दर्भे आद्याचार्यस्य भरतमुनेः मतस्य विवेचनाऽनन्तरं कविकुलगुरोः महाकवे. कालिदासस्योक्तीरपि द्रक्ष्यामः ।—"अपूर्वेयं कला न केवलं मानवानां कृते एव, अपित्वन्येषां देवयक्षरक्षसां गन्धर्वाणां च कृते सामान्यरूपेण आह्लादिका प्रमाणिता" एवं विस्तरशः निरूपयन् स्वप्रसिद्धस्य मालविकाग्निमित्रनाम्नः नाटकस्याऽऽरम्भ एव महाकविः कालिदासः एवमुपवर्णयति—

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वांगे विभक्त द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधकम् ॥

मालवकाग्निमित्रम्-१/४

नाट्यशास्त्रप्रवर्त्तकाः भरतादयो मुनयश्चाऽन्येऽपि, इदं नाट्यं

देवानामिन्द्रादीनां कृते चाक्षुषं चक्षुषाऽनुभाव्यं क्रतुं यज्ञम् इत्यामनन्ति । "रुद्रः शिवः शंकरो वा" तेनाऽपि उमाकृतव्यतिकरे पार्वत्या सह परिणयाऽनन्तरं स्वाङ्गे स्वार्धनारीश्वररूपे लास्य-ताण्डवभेदेन द्विधा विभक्तम् । अत्र त्रैगुण्यं सत्वरजस्तमांसीति त्रयो गुणाः यथायोग्यं जायन्ते । लोकचरितं लोकस्थानां रामाद्यनुकार्याणां चरितमाचरणं यावत्, नानारसम् बहुविधाः रसाः प्रियतयोपभोग्याः शृंगारवीरादयो यस्मिंस्तत्तथोक्तं दृश्यते-ज्ञायते । लोकेऽनुकार्यस्य चरितं सुखदुःखमिश्रात्मकमित्र नाट्याऽभिनयसमर्पितं सत् सुखरूपेणैव सामाजिकैरास्वाद्यते ।

अस्य दिव्यसाहित्यस्य रोचकतया भावुकतया च प्रभावितो भरतमुनिः इदं नाट्यं पञ्चमं वेदमिति मन्यते स्म—

महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः ।
क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ।।
न वेदव्यवहारोऽय संश्राव्यः शूद्रजातिषु ।
तस्मात्सृजाऽपरं वेदं पञ्चमं सार्ववर्णिकम् ।।

भरतनाट्यशास्त्रम् १/११-१२

जगत्सवितारं भगवन्तं ब्रह्माणं महेन्द्रप्रमुखाः देवाः प्रार्थयन्ति यद् भवान् एतादृशं पञ्चमं वेदं कल्पयतु यस्य रसास्वादं ज्ञानं च शूद्राः महिलाः अल्पज्ञाः अपि सामान्यभावेन ग्रहीतुं सक्षमाः स्युः । इत्थं ब्रह्माणं प्रति देवदेवाधिपतिप्रार्थनाव्याजेन भरतमुनिः ग्रन्थनिर्माणप्रयोजनं प्राकटयत् ।

नाऽत्र सन्देहः यन्महाकाव्योपन्यासनाटकेषु काव्यस्य तिसृषु

अपि विधासु रसः गृह्यते । यद्येवम्, तर्हि नाट्यसाहित्यस्य किं निजं वैशिष्ट्यं स्यात् ? इति प्रश्नेऽवतरिते तत्समाधानप्राप्तिकामनया, काव्यस्य तिसृणामपि विधानां सम्यक् पर्यालोचनमावश्यकं प्रतिभाति—नूनं भाषा एव हि भावानां प्रकटने प्रमुखं साधनम्, भाषा च क्वचिद् गद्यमयी, क्वचित्पद्यमयी चेति । किमपि वस्तु गद्येन वर्ण्यते, किमपि च पद्येन । प्रायः गद्यमयं वर्णनं कथाऽऽख्यायिका-कथालिकाप्रभृतिभिर्नामभिर्व्यपदिश्यते । पद्यमयं च वर्णनं काव्यनाम्ना व्यवह्रियते, तन्महाकाव्यं, खण्डकाव्यम्, उपकाव्यं वा किमपि भवतु । कथासाहित्यमेव (यत्सम्प्रति 'उपन्यास' नाम्नाऽभिधीयते) गद्यस्य प्रधानाऽनुकृतिः विद्यते ।

रूपकन्तु नाऽपि केवलं गद्यमयं, नाऽपि केवलं पद्यमयम्, यद्यपि हि तत्र गद्यपद्ययोरुभयोरपि संस्थितिर्भवति । सम्वादसमावेशेन तद् गद्यप्राबल्ययुतं जायते-किन्तु न तत्र पद्यानां गौणता । भावानां समुत्कर्षः, रसानां च परिपाकः पद्ये एव प्रायः दृश्यते । प्रायः जगतः सर्वासां भाषाणां नाट्यसाहित्ये पद्यमुपलभ्यते ।

महाकाव्यस्याऽपेक्षया नाट्यसाहित्ये रूपकेषु चरित्रचित्रणस्य प्राधान्यं भवति । रामायणोत्तररामचरितयोः कथानकस्य सामान्येऽपि रामस्य चरित्रपर्यालोचने भिन्नता स्वत एव द्योतते । रामायणे पुत्रभ्रातृपितृपतिनृपराष्ट्रोद्धारकादिनानारूपेषु महर्षिर्वाल्मीकिः रामं चित्रितवान् । अथ च भवभूतिः उत्तररामचरिते विशिष्ट-परिस्थितौ वर्तमानं तं रामं केवलं पतिरूपेण प्रदर्शयति, यत्र पत्नी सीतामाश्रित्य तस्य व्यक्तिगतं रूपमेव विकासमाप्नोति । दर्शका-स्तत्र रूपकेषु पात्राणामन्तःकरणैः तेषां सुखदुःखादिमानसिकपरि-

स्थिते. प्रत्यक्षं ज्ञानमुपलभन्ते। यद्यपि हि इत्थं महाकाव्याऽपेक्षया नाटकमेकाङ्गि एव भवति। तत्र हि पात्राणां चरित्रनिरूपणं व्यक्तिप्रधानं सदपि सुमहत्प्रभावि सम्पद्यते।

अथ च यद्यपि हि कथा (उपन्यास) नाटकयोः कथानके उभयत्र व्यक्तिगतच्चरित्रस्य प्राबल्यं सन्दृश्यते-तथापि तयोर्भिन्नत्वमपि स्पष्टमेव प्रतिभाति। उपन्यासेषु प्रायः अतीतो भूतकालः एव गृह्यते यं लक्ष्यीकृत्याऽन्यकथानकाख्यानयोः निर्माण भवति।

आधुनिके च काले फ्रेञ्चांग्लादिषु विदेशीयभाषासाहित्येष्वेतादृशाः उपन्यासाः विद्यन्ते येषां कथावस्तु भाविनीं काञ्चिदपि घटनां लक्ष्यीकरोति, तथापि कविः तद्घटनाचक्रं भूतवत् पाठकानां समक्षे प्रस्तौति नयति वा। एवं दृश्यकाव्येष्वपि अतीतकालसम्बन्धिनी एव कापि घटना वर्ण्यते, तथापि कवेः नटानाम् अभिनेतॄणां वा चातुर्येण प्रेक्षकाणां समक्षे तद्वर्णनं चाक्षुषमिव प्रतिभाति। एवं हि पाठकेभ्यः दर्शकेभ्यो वा नाटकम् उपन्यासादधिकं रुचिकरं सम्पद्यते। उपन्यासेषु वयं कल्पनामेवाऽऽश्रयामहे, किन्तु नाटके दृश्यकाव्ये इतिहासमपि प्रत्यक्षमिवानुभवामः। नाटकेषु पात्राणां साहाय्येन कवेः चातुर्यं दर्शकानां समक्षमागच्छति, अतएव तेषूपन्यासाऽपेक्षया पाठकानामन्तःकरणं प्रभावयितुमधिका शक्तिः दृश्यते।

महाकाव्यापेक्षया एतयोरुभयोः नाटकोपन्यासयोः जीवनस्य व्यापकतरं रूपं दृश्यते। अत्रोभयत्र च जीवनस्य विविधाङ्गाना। चित्रणे पूर्णप्रयासोऽपि क्रियते। दृश्यकाव्येष्वस्याः कलायाः विकसिततरं रूपं चोपलभ्यते। कथावस्तु दृश्येषु विभज्य तदेतावता रूपेण

काव्येऽस्मिन् ग्रथ्यते यत् पाठकानां कौतूहले सततं वर्तमानानां समग्रपात्राणां यथायोग्यं व्यञ्जनं स्वत एव भवति। अतएव वस्तु-नायकरसाः नाटकस्य त्रयो भेदाः मताः, येषां नाट्यकला-विकासे पर्याप्तः प्रभावो विद्यते। काव्यप्रकाशकारः महाकविमम्मट-महाभागः काव्यस्योद्देश्येषु "कान्तासम्मिततयोपदेशयुजे" इत्येक-मुद्देश्यं मन्यते, यस्य च पूर्तिः सर्वत्र नाट्यदृश्यकाव्येनैव प्रभवितु-मर्हति।

काव्यस्य सतताह्लादकवृत्या सहास्मिन् साहित्ये पद्यश्लोकानां मध्ये गद्यात्मकः संवादोऽपि समाविश्यते-यत् संस्कृतनाटकस्यान्य-भाषानाटकानामपेक्षयाऽनन्यं वैशिष्ट्यं भवति। एवं मध्यवर्त्ति गद्यं भाविपद्यं प्रति भूमिकारूपेण सन्तिष्ठते। कतिपयेषु रूपकेषु गद्य-पद्ययोः एतादृङ्मिश्रणं भवति यच्छ्लोकांशस्यैवाऽनन्तरं गद्यस्य पाठः समारभ्यते। तस्य समाप्ताववशिष्टः श्लोकांशः पुनः पठ्यते। उत्तर-रामचरितं महाकवेः भवभूतेः करुणरसस्य सर्वोत्कृष्टा कृतिः वर्तते। तस्मिन्नस्याः प्रणाल्याः एवं दर्शनं भवति—

(नेपथ्ये) "सीतादेव्याः स्वकरकलितैः सल्लकीपल्लवाग्रैः
अग्रेलोलः करिकलभको यः पुरा वर्द्धितोऽभूत्।"

सीता—किं तस्य.................

(पुनः नेपथ्ये) "वध्वा सार्धं पयसि विहरन् सोऽयमन्येन दर्पाद्
उद्दामेन द्विरदपतिना सन्निपत्याऽभियुक्तः॥

उत्तर० ३/६

उत्तररामचरितस्य तृतीयेऽङ्के तमसामुरले नदीभिः सह सीता-

विषयिकीं वार्ता कुरुतः। तस्मिन्नेवाऽवसरे सीता प्रविशति 'वासन्त्याश्च स्वरः नेपथ्ये श्रूयते। पूर्वोल्लिखितस्य नेपथ्य एव पठितस्य श्लोकस्य पूर्वार्धं श्रुत्वा सीता सकुतूहलं भाषते "किं तस्य–" इत्यादि–तदनु श्लोकस्योत्तरार्धः नेपथ्ये पठ्यते। श्लोकस्य भावः एवं......"किञ्चित्कालपूर्वं गजस्य यं चपलं शावकं देवी सीता स्वयं स्वहस्तदत्तैः सल्लकीलतायाः पल्लवाग्रभागैः परिवर्धितवती।" स्ववत्सतुल्यस्य गजशावकस्य सम्बन्धे श्लोकस्य पूर्वार्धेन पठितं वचनं श्रुत्वा सीतायाः हृदिस्था जिज्ञासा कवेः "किं तस्य" इत्यादिशब्दैः दर्शकानां समक्षे प्रकटिता। सीतायाः गद्यमयी एषा वाणी श्लोकस्य मध्ये एव कविना निबद्धा। यदुत्तररूपा वाणी श्लोकस्योत्तरार्धेन नेपथ्ये प्रस्तूयते। तस्य चाऽयं भावः—"स शावकः स्ववध्वा (भार्यया) सार्धं जलक्रीडायां संलग्नः दर्पवशादेवाऽन्येन मत्तेन गजेनाक्रान्तः संजातः" इति।

संस्कृतरूपकेषु विभिन्नाः पात्रविशेषाः अभिनेतारः स्वयोग्यतानुरूपं सामाजिकार्हताऽनुरूपं च विभिन्नाः भाषाः प्रयुञ्जते। नायकः राजा, ब्राह्मणाः विद्वांसः संस्कृतं वदन्ति। यदा च महिलाः निम्नवर्गस्थाश्च पात्रविशेषाः प्राकृतभाषाभाषिणो भवन्ति। प्राकृतभाषायाश्च बहवो भेदाः प्रभेदा उपभेदाः वा विद्यन्ते। येषाञ्च प्रयोगः पात्रविशेषैः विभिन्नप्रकारेण क्रियते। महाकविना शूद्रकेण विरचितं 'मृच्छकटिकम्' नाम एतादृशं प्रकरणं विद्यते, यस्मिन् यस्याः प्रणाल्याः चरमोत्कर्षः सन्दृश्यते। लोके प्रचलिताः सर्वाधिकाः प्राकृतभाषाः अस्मिन्नेव प्रकरणे प्राप्यन्ते। अत्र तासां स्थितिः एवं विद्यते—

| प्राकृतभाषा | प्रयोक्तारः पात्रविशेषाः |
| --- | --- |
| १- महाराष्ट्री | नायिकाः, उत्तमकुलीनाः महिलाश्च |
| २- शौरसेनी | बालकाः, उत्तमसेवकाश्च |
| ३- मागधी | राजगृहस्याऽनुचराः |
| ४- अवन्ती | खलाः, द्यूतकाराश्च |
| ५- आभीरी | गोपालाः |
| ६- पैशाची | अग्निदाहकाः |
| ७- अपभ्रंशम् | वैदेशिकाः, घृणितकार्यकर्त्तारश्च |

आङ्गलदेशस्य प्रसिद्धः 'एलिजावेथ' अभिधानायाः साम्राज्याः (१५५८-१६०३ ई०) समकालिकः 'शेक्सपियर' महाभागः महाकविः नाटककारश्चाऽऽसीत् । तस्य नाटकानां संस्कृतनाटकैः सह तुलनायाम् उत्कृष्टा समता दृश्यते । संस्कृतरूपकेषु विदूषकः, शेक्सपियरनाटकेषु मूढः (Fool of Shakspere) एतौ द्वावपि समानावेव । उभयदेशीययोः पद्धत्योः राष्ट्रस्य देशस्य वा सर्वाङ्गीणचित्रणस्य स्थाने पात्राणां व्यक्तित्वस्य चित्रणं प्रमुखतया भवति । उभयोरपि स्थानानां कालानां वाऽन्वित्याः अभावः एव विद्यते । रूपकेषु अब्दानां घटनाचक्रं क्षणेनैव प्रकटीक्रियते । प्राचीनयूनानदेशस्य प्रसिद्धाऽरस्तूदार्शनिकमनाऽनुसारं रूपकेषु तासामेव घटनानां चित्रणमुचितं भवति, यासां प्रवाहः दिनरात्रिसीमाबद्ध एव भवेत् । सिद्धान्तस्याऽस्य प्रतिकूलतया नाटकेषु समेषां सुदूरवर्तिनां स्थानानां दीर्घकालाऽवधीनां दूरभाजां वा घटनाचक्राणां प्रस्तुतिः पाठकानां दर्शकानां वा समक्षे एवं क्रियते, यत्तानि सहजवद्भान्ति । उभय-

पद्धत्योः कथानकेषु-औत्सुक्यं प्रादुर्भावयितुं विषयाणां समावेशः, गद्यपद्यसम्मिश्रितानां कथानाम् अन्तर्गताः नानागौणकथाः कविकल्पनाचातुर्येण सृज्यन्ते ।

प्रकृतेः मानवीकरणं संस्कृतरूपकाणामपूर्वा विशेषता । एषु रूपकेषु मानवस्य प्रकृत्या सह सम्पर्कस्य चरमोत्कर्षः विद्यते । वृक्षाः, लताः, पशवः, पक्षिणः सर्वं एव रूपके विशिष्टानि पात्राणि भवन्ति । येषां साहाय्येन प्रकृतेः मानवीकरणस्य चित्राणि पाठकानां समक्षे प्रस्तूयन्ते । कविकुलगुरोः महाकवेः कालिदासस्य अभिज्ञानशाकुन्तले नाटके पत्युः गृहगमनाऽवसरे शकुन्तला लता-पादपमृग-पशु-पक्षिप्रभृतीन् सर्वान् प्रति स्वात्मीयतां प्रकटयति । पतिगृहगमनाय सा तेषामप्यादेशं प्रतीक्षते । प्रकृति-पशु-पक्षिणामेतादृशं मानवीयकरणं प्रेक्ष्य योरोपखण्डीयाः वैदेशिकाः विद्वांसः साहित्याऽनुसन्धानक्षेत्रेऽपूर्वां घटनां मन्यमानाः कालिदासस्योत्कृष्टानपि रूपकान् अभिनयदृष्ट्या सदोषानमन्यन्त । तेषां विचारेण भावानां सुकुमारतया प्रकृतिपशुपक्षिणां मानवीयकरणस्य बाहुल्येन इमानि नाटकानि नाट्यदृष्ट्या महत्वहीनानि विद्यन्ते । रंगपीठे नानाचित्राणि एतादृशान्यपि प्रस्तुतानि भवन्ति येषु द्यावापृथिव्यौ स्वर्गनरके वा समानरूपौ (एकरूपौ वा) भवतः । यक्षराक्षसनराणामेकस्मिन्नेव स्थले एतादृशं सम्मिश्रणं क्रियते यत्ते समानस्वरूपा एवाऽऽभान्ति ।

आस्माकीनप्राचीनाऽऽचार्याणां मतानुकूलं संस्कृतरूपकाणि रसप्रधानानि भवन्ति । कथावस्तुभावाऽपेक्षया दर्शकपाठकानामन्तःकरणेषु रसनिष्पत्तिः महत्वमावहति । कालिदासस्य रूपकेषु भावानां कोमलत्वं तद्बाहुल्यं च पाठकानां हृदयेषु रसमुत्पाद्य भावान् स्थिरी-

करोति । नाट्यस्य न्यूनतासम्बन्धे गीर्वाण्याचार्याणां मतेन, रंगस्य विकासेन, पात्राणां प्रमत्तताऽभावेन, सततसावधानतया च इमानि दृश्यानि सरलतया रंगपीठे प्रस्तोतुं योग्यानि भवन्ति । पशुपक्षिणां मानवीयकरणम्, भूर्भुवःस्वर्लोकानां साम्यमाधायोत्पतनचित्राणां दर्शकानां समक्षे समुपस्थापनमेतादृशघटनाचक्रस्योदाहरणं विद्यते ।

रूपकस्यान्यपात्राणीव पशवोऽपि रंगशीर्षे स्वकीयमस्तित्वं प्रकटयितुं शक्नुवन्ति इत्यत्र वर्तमानकाले सरकसाख्यानि प्रदर्शनानि प्रमाणभूतानि विद्यन्ते, यत्र पशुपक्षिणोऽपि मानवैः सह स्वप्रस्तुतिभिर्दर्शकानां मनांसि हरन्ति । एवं मानवेतरप्राणिषु मानवीयभावानां समारोपणं भवति । यदा च रंगशीर्षः द्विभूमिर्भवति तदा तु गमनोत्पतनस्य क्रियाः सरलतयाऽभिनेयाः भवन्ति ।

संस्कृतसाहित्ये रूपकस्यारम्भः प्रस्तावनया भवति, यस्याः नान्दी इति आदिमः श्लोकः । ग्रन्थस्यारम्भे नान्दी, मंगलाचरणरूपेण सर्वजनहिताय दर्शकपाठकानां श्रेयसे च इष्टदेवस्य प्रार्थनारूपा भवति । प्रस्तावनायां सूत्रधारनटीविदूषकानां परस्परसंलापेन नाटककारनाटकयोः परिचयः भवति । महाकविः विश्वनाथः स्वप्रसिद्धे साहित्यदर्पणग्रन्थे नान्दीमेवं वर्णयति—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ।।

साहित्यदर्पण, ६/२४

अस्मिन् पाठे जगत्स्रष्ट्रे जगदीश्वराय कृतज्ञताप्रदर्शनम्, देवानां प्रार्थनोपासनाः, ब्राह्मणनृपादीनां व्यवहारदृष्ट्या कस्यैचित्कामना-

पूर्त्यै स्तुतिर्वा भवति। यथायोग्यमाशीर्वचनान्यपि एतस्मिन् समावेश्यन्ते। एवं य पाठं श्रुत्वा देवाः द्विजाः ब्राह्मणाः नृपादयश्च नन्दन्ति (नन्दिष्यन्ति) प्रसन्नतां मोदतां वा प्राप्नुवन्ति (प्राप्स्यन्ति) स एव नान्दीत्यभिधीयते।

सूत्रधारः पठेत्तत्र मध्यमं स्वरमिश्रितः।
नान्दीं पदैः द्वादशभिरष्टाभिर्वाप्यलंकृतम्॥

नाट्यशास्त्र ५/१०७

एवं नाट्यारम्भे सूत्रधारः समष्टिहितसाधनार्थं नान्दीपाठं करोति यस्मिन् अष्टौ द्वादश वा पदानि अलंकृतशब्दवाक्ययुतानि भवन्ति।

**प्रस्तावना :**

नटी विदूषको वाऽपि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते।
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥

साहित्यदर्पण, ६/३१-३२

रूपकस्याऽऽदिमो भागः प्रस्तावनाऽऽमुखो वेति नाम्ना निगद्यते, तस्मिन् प्रासंगिके भागे सूत्रधारस्य नटी-विदूषक-प्रभृतिभिः पात्रैः सह परस्परं संलापो भवति, वार्ताप्रसंगेऽस्मिन् वयं तस्य कवेः रूपकस्य कथावस्तुनः सामान्यं परिचयं प्राप्नुमः।

रूपकस्य प्रस्तावनायाः अग्रिमो भागो दृश्यांकेषु विभज्यते। पात्रैकस्यागमनादन्यपात्रगमनपर्यन्तो भागः दृश्यमिति कथ्यते। अंकस्य समाप्तौ तु सकलं रंगपीठं रिक्तं भवति। अंकस्यादौ मध्ये वा

विष्कम्भक-प्रवेशकयोः समावेशः क्रियते । अस्मिन् संवादैः स्वगत-भाषणैर्वा प्रेक्षकाणां ध्यानम् एतादृशीः घटनाः प्रत्याकृष्यते यासां रंगपीठे नाट्यसमायोजनं सुदुष्करं भवति, परन्तु यासां परिज्ञानं भाविकथावस्तुज्ञानार्थमावश्यकं भवति तासामेवाऽत्र समावेशः क्रियते । साहित्यदर्पणे विष्कम्भस्य लक्षणमेवं विद्यते—

वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भः आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात्स तु, संकीर्णः नीचमध्यमकल्पितः ॥

साहित्यदर्पण ६/५५-५६

अस्मिन् सन्दर्भे दशरूपककारस्य धनञ्जयस्य मतमेवं विद्यते—

वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजकः ॥ दशरूपक १/५९

एवं विष्कम्भकः रूपकस्य स भाग उच्यते, यः अंकस्यादौ भवति । स ग्रन्थस्य व्यतीतकालाऽवस्थिताः घटनाः संग्रहेण वर्णयति । तत्रैकस्य मध्यमस्यैकभाषितम्, द्वयोर्वा मध्यमयोः पात्रयोः परस्परं संविहितः वार्तालापो भवति । तस्मिंश्च भाविकथावस्तु वर्ण्यते ।

विष्कम्भस्य प्रभेदौ द्वौ, शुद्धः संकीर्णश्च । शुद्धे मध्यमपात्रप्रयोगो भवति, संकीर्णे च मध्यमाधमपात्रयोः युगपत् प्रयोगः भवति । यथा, दशरूपके—

"एकाऽनेककृतः शुद्धः संकीर्णो नीचमध्यमैः ।"

प्रवेशकस्य लक्षणं विश्वनाथोक्तमेवम्—

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।

अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भे यथा ।। साहित्य० ६/५७

दशरूपकेऽपि प्रवेशकलक्षणमित्थम्—

तद्वदेवाऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।

प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ।। दश० १/६०-६१

प्रवेशके प्राकृतभाषासाहाय्येन नीचपात्रैः नाट्यप्रयोगः सम्पद्यते । भागोऽयं अङ्कद्वयस्यान्तः एव भवति । विष्कम्भवदस्मिन्नपि भूत-भाविकथावस्तुनां सग्रहेण निदर्शनं भवति ।

रूपकस्य समाप्तिः भरतवाक्येनैव क्रियते । यस्मिन् रूपकस्य नायकः राष्ट्रस्य समष्टिहितकामनामभिलक्ष्य इष्टदेवं प्रार्थयति ।

विभिन्नकोटीनां रूपकाणामङ्केष्वपि संख्यान्तरं भवति । यथा—प्रहसने एकः, नाटिकायां चत्वारः, नाटके पञ्चाधिकाः दशपराः अंकाः भवन्ति ।

एवं रूपकाणां क्रमविवेचनाऽनन्तरमथ वृत्तीनामुल्लेखनम् यासु भिन्नास्ववस्थासु रूपकस्य प्रयोगो भवति, सा "वृत्तिः" इति कथ्यते । वृत्तयश्चतस्रः विद्यन्ते । यासां नामानि—भारती, सात्वती कैशिकी, आरभटी चेति । आसां लक्षणानि नाट्यशास्त्रे भरतमुनिः एवं वर्णयति—

**भारती—**

"या वाक्प्रधाना पुरुषप्रयोज्या, स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।

स्वानामधेयैर्भरतैः प्रयुक्ता, सा भारती नाम भवेत्तु वृत्तिः ।।"

नाट्यशास्त्र (२०/२२)/५०

छन्ननेतृप्रतीचारो नर्मगर्भोऽर्थहेतवे ।
अगैः सहास्यनिर्हास्यैरेभिरेषाऽत्र कैशिकी ।।

दशरूपक २/५१-५२

**आरभटी--**

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
संक्षिप्तिका स्यात् संफेटो वस्तूत्थानावपातने ।।
संक्षिप्तवस्तुरचनासंक्षिप्तिः शिल्पयोगतः ।
पूर्वनेतृनिवृत्यान्ये नेत्रन्तरपरिग्रहः ।।
संफेटस्तु समाघातः क्रुद्धसंरब्धोर्द्वयोः ।
मायाद्युत्थापितुं वस्तु वस्तूत्थापनमिष्यते ।
अवपातस्तु निष्कामप्रदेशत्रासविद्रवैः ।।

दशरूपक २/५६-५९

आरभटीवृतौ माया, मन्त्रबलेनाऽप्रस्तुतवस्तुप्रकाशनमिन्द्र-जालम्, युद्धम् वीराणाममर्षतेजोद्दीपकाश्चेष्टाः वा निरूप्यन्ते । संक्षिप्तिका-संफेट-वस्तूत्थापनाऽवपातनानि चत्वारोऽस्य भेदाः । तत्र मृद्वंशदलचर्मादिद्रव्ययोगेन वस्तूत्थापनं संक्षिप्तिः । क्रुद्धयोः वीरयोः परस्परोल्लापणमधिक्षेपणं च संफेटः । मायेन्द्रजालप्रस्तुतं कथावस्तूत्थापनम् । वीरपात्राणां निष्क्रमणप्रवेशभयपलायनादि-सूचकाः चेष्टाः अवपाते निरूप्यन्ते ।

**रङ्गकला--**

एवं रूपकेषु प्रयुक्तानां परिभाषाणां विवेचनाऽनन्तरमस्मद्देशीयरङ्ग-कला-सम्बन्धेऽपि किञ्चिद्वक्तुमुचितम् ।नाट्यमेव नाट्यकलायाः सर्व-

प्रमुखं तत्वं विद्यते। यस्य कृते रङ्गशालाया: प्रेक्षागृहस्य वा महती आवश्यकता विद्यते । सर्वत: प्रागियं कदा निर्मितेति विषये किञ्चिदपि कथनं दुष्करमेव विद्यते । आचार्यभरतमतेन अस्या: उत्पत्ति: देवेभ्य: एव संजाता—

देवलोके स्वभूमौ देवेन्द्रस्याऽऽज्ञया लक्ष्मीस्वयंवरं नाम विशिष्टं नाटकं कदाचिद् प्रस्तुतमभूत् । महार्हे तस्मिन्नवसरे देवलोकनिवासिनी—'उर्वशी' नाम्ना प्रसिद्धाऽप्सरा लक्ष्म्या: अभिनयमेवं चातुर्येण कुशलतया सम्पादितवती, यत्साऽऽत्मानं 'लक्ष्मीम्' एवाऽमन्यत । तदनुसारमेव स्वचेष्टा: अपि कृतवती । यदा हि लोकपितामहो ब्रह्मा तां विशिष्टामप्सरां लक्ष्म्यनुकृतौ प्रवृत्तामपश्यत् तदा क्रोधामर्षवशात् "गच्छाऽधस्तान्मर्त्यलोकम्" इति तां शशाप । तदनु तया सहैव रंगशालाया: नाट्यकलायाश्च भूलोके प्रवेशोऽभवत् । अस्या: घटनाया: सत्याऽसत्यविवादेनाऽलम् ।

भारतीयरंगशालाया: रंगशीर्षस्य वाऽऽदिस्वरूपं भरतनाट्यशास्त्रे इत्थमुपलभ्यते ।

त्रिविध: सन्निवेशश्च शास्त्रत: परिकल्पित: ।
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव तु मण्डप: ।।
तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथाऽवरम् ।
प्रमाणमेतेषां निर्दिष्टं हस्तदण्डसमाश्रयम् ।।
शतं चाष्टौ चतु:षष्ठिर्हस्ता द्वात्रिंशदेव च ।
अष्टाधिकं शतं ज्येष्ठं चतु:षष्ठिस्तु मध्यमम् ।।
कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते ।

नामाऽऽधारेण सन्ति। पुराकाले भरत-सात्वत-केशिकारभटाः विशिष्टाः जातयः बभूवुः। तेषामाधारेणैव क्रमशः भारती सात्वती, कैशिकी, आरभटी इति विशिष्टानि वृत्तिनामानि प्रचलिता-न्यभूवन्।

एतासां वृत्तीनां सम्बन्धे नाट्यशास्त्रस्याद्याचार्याणां मतनिरू-पणानन्तरं प्रसिद्धालोचनाशास्त्राचार्याणां दशरूपकप्रणेतॄणां धनञ्ज-यमहाभागानां विचारणायाः समुल्लेखनमावश्यकं प्रतिभाति। वृत्तीनां सम्बन्धे तस्य कथनमेवं विद्यते।

**भारती—**

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत्॥
भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः।
भेदैः प्ररोचनायुक्तैः वीथीप्रहसनामुखैः॥

दशरूपक ३/४-५

पुरुषविशेषप्रयोज्यः संस्कृतबहुलः वाक्प्रधानो नटाश्रयो व्यापारो भारती। प्ररोचनावीथीप्रहसनाऽऽमुखानि चाऽस्यामङ्गानि।

**सात्वती—**

विशोका सात्वती सत्वशौर्यत्यागदयार्जवैः।
संलापोत्थापकावस्यां सांघात्यः परिवर्तकः॥

शोकहीनः सत्व-शौर्य-त्याग-दया-हर्षादिभावोत्तरो नायकव्या-पारः सात्वती। तदङ्गानि च संलापोत्थापकसांघात्यपरिवर्तका-ख्यानि। तथा च—

संलापको गम्भीरोक्तिर्नानाभावरसा: मिथः ।
उत्थापकस्तु यात्रादौ युद्धायोत्थापयेत्परम् ॥
मंत्रार्थदैवशक्त्यादेः सांघात्यः संघभेदनम् ।
प्रारब्धोत्थानकार्यान्यकरणात्परिवर्तकः ॥

दशरूपक २/५३-५५

विविधप्रकारकैः भावरसैर्युक्ताः गम्भीरोक्तयः 'संलापक' इति नाम्नोच्यन्ते । यत्र संग्रामनिमित्तं शत्रोरोजोमयैः वाक्यैः प्रचोदनं भवति तदुत्थापकमिति कथ्यते । यदा मंत्रस्यार्थस्य दैवस्य वा साहाय्येन बलेन च संघभेदन भवति स सांघात्यः । प्रस्तुतस्योद्योगकार्यस्य परित्यागेन कार्यान्तरकरणं परिवर्तकः ।

**कैशिकी---**

तद्व्यापारात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी ।
गीतनृत्यविलासाद्यैः मृदुः श्रृंगारचेष्टितैः ॥
नर्म तत्स्फिञ्जतत्स्फोटतद्गर्भैश्चतुरंगिका ।
वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम् ॥

दशरूपक २/४७-४८

कैशिकीवृत्तौ गीतनृत्यविलासकामोपभोगाद्युपलक्ष्यमाणो मृदुः श्रृंगारी कामफलाऽवच्छिन्नो व्यापारः परिलक्ष्यते । अस्याः वृत्याः 'नर्मनर्मस्फिञ्जनर्मस्फोटनर्मगर्भ' इति चत्वारः भेदाः सन्ति । नर्मे नायिकायाः श्रृंगारचेष्टासु नायककृतं स्वानुकुलताप्राप्तये साधनानि वर्णितानि भवन्ति ।

नर्मस्फिञ्जः सुखारम्भो भयान्तो नवसङ्गमे ।
नर्मस्फोटस्तु भावानां सूचितोऽल्परसो लवैः ॥

भारतीवृत्तौ वार्त्तालापस्य प्रधानता भवति । तस्यां पुरुषपात्रा-ण्येव नाट्यं सम्प्रयुञ्जते । महिलानां कृते तस्यां निषेधो भवति । तस्यां प्राकृतवाक्यरहिता संस्कृतवागेव केवलं प्रयुक्ता भवति । भरतैः नटैः प्रयुक्ता, तस्मादियं 'भारती' वृत्तिरिति कथ्यते ।

**सात्वती–**

"या सात्वतेनेह गुणेन युक्ता, न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्वती नाम भवेत्तु वृत्तिः ॥"
नाट्यशास्त्र (३०/२२)/(३७/३८)

यस्यां वृत्तौ सत्वगुणस्याधिकोपयोगो भवति, यत्र च न्यायो-चितान्याचरणानि समन्वितानि भवन्ति, यस्यां चैतादृशीनां घटनानां समावेशः क्रियते-यथा सर्वे प्राणिनः स्वकृतकर्मणां परिणामं रंगपीठे ऽनुभवन्ति । एवं तत्र हर्षशोकद्वन्द्वानामभावो भवति । यदाकदाचित्तु शोकपूर्णदृश्यः उपस्थितः भवति, तदा अद्भुतैरुपायैः तस्य प्रशमनं क्रियते ।

**कैशिकी—**

या श्लक्ष्णनेपथ्यविशेषचित्रा, स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा, तां कैशिकीं वृत्तिमुदाहरन्ति ॥
ना० शा० (२०/२२)/ (४६/४७)

या वृत्तिः शोभनपरिधानोपेता भवति । महिलाः यस्यां स्वकीय-विविधाऽङ्गविक्षेपनृत्यगीतादिचेष्टाभिः प्रेक्षकान् रुजयन्ति, कामो-द्दीपकाः भावाः बहुलतया यत्र सन्ति, सा वृत्तिः विद्वद्भिः कैशिकी-वृत्तिरिति कथ्यते ।

**आरभटी—**

प्रस्तावपातप्लुतलङ्घितानि चान्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युक्तानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति ॥
ना० शा० (२०/२०)/(५६/५६)

यस्यां वृत्तौ उत्थानपतनलङ्घनानां विशिष्टाः रोचकाः घटनाः भवन्ति, ऐन्द्रजालिकाः स्वबुद्धेरुत्कर्षेण विविधानिन्द्रजालान् इव यत्र स्वक्रियाकलापान् प्रदर्शयन्ति, यस्याञ्च आश्चर्ययुक्तानि चित्राणि प्रयुक्तानि भवन्ति, सा वृत्तिः आरभटी इति गद्यते ।

एताश्चतस्रो वृत्तयः स्वविशिष्टं महत्वं प्रकटयन्ति । तासां संक्षेपेण रूपं प्रयोगञ्च नाट्यशास्त्रे आचार्यो भरतः एवं प्रतिपादितवान्—

शृंगारे चैव हास्ये च वृत्तिः स्यात् कैशिकीति सा ।
सात्वती नाम सा ज्ञेया, वीररौद्राद्भुताश्रया ॥
भयानके च बीभत्से रौद्रे चारभटी भवेत् ।
भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥
नाट्यशास्त्र (२०/२२)/६२-६४

कैशिकीवृत्तिः शृंगारहास्यरसयोः प्रदर्शने स्वकौशलं प्रकटयति । यदा वीररौद्राद्भुतरसानां मध्ये कस्यचिद्रसस्य विशिष्टं प्रदर्शनं भवति, तत्र सात्वतीवृत्तिः प्रयुज्यते । भयानक—बीभत्स-रौद्ररसानां चित्रणे आरभटीवृत्तिः सहायतया भवति । करुणाऽद्भुतरसनिरूपणे भारतीवृत्तिरुपयोगिनी भवति । एतासां वृत्तीनां नामकरणविषये कतिपयाचार्याणां मतं विद्यते, यदेतासां नामानि जातीय-

देवानान्तु भवेज्ज्येष्ठं नृपाणां मध्यमं भवेत् ॥
शेषाणां प्रकृतीनान्तु कनीयः संविधीयते ॥
भरतनाट्यशास्त्रम् २/८-११

आकृत्यनुसारं प्रेक्षागृहाणां त्रयो भेदा सन्ति । विकृष्टं आयताकारम्, चतुरस्रं वर्गाकारम्, त्र्यस्रं त्रिभुजाकारञ्च भवति । एतेषां प्रेक्षागृहाणां पुनः प्रमाणानुसारं त्रिप्रकारो विधिः प्रकल्पितः । तेषां नामानि ज्येष्ठं मध्यमवरमिति प्रसिद्धानि सन्ति । सर्वेषामेतेषां प्रमाणं हस्तदण्डौ समाश्रित्य द्विधा विभक्तम् । हस्तानां दण्डानां वा प्रमाणेन, ज्येष्ठं शतं चाऽष्टौ (१०८) संख्याप्रमाणकम्, मध्यं चतुःषष्ठि (६४) संख्यामितम्, अवरन्तु द्वात्रिंशत् (३२) संख्याप्रमितं भवति । एवं प्रेक्षागृहाणामष्टादश भेदाः भवन्ति ।

प्रेक्षागृहाणां ज्येष्ठं देवानां कृते, मध्यं तु नृपाणाम्, अवरञ्च मानवानां सामान्यप्रकृतीनां कृते नियतं भवति ।

प्रेक्षागृहाणां सर्वेषां प्रशस्तं मध्यमं स्मृतम् ।
तत्र पाठ्यञ्च गेयञ्च सुखश्राव्यतरं भवेत् ॥
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः ।

एतेषां त्रयाणां प्रेक्षागृहाणां मध्ये मध्यममेव सर्वोत्तमं प्रशस्यतमं वा मतम् । अत्रैव हि सर्वं पाठ्यमभिनेयं गीतञ्च सहजसुखेन श्रवणीयं भवति ।

विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः ।
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम् ॥
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः ।
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा ॥

एतेषां विकृष्टः चतुरस्रः त्र्यस्रः इति त्रयो भेदाः। विकृष्टं ज्येष्ठम्, चतुरस्रं वर्गाकारं मध्यमम्, त्र्यस्रं समत्रिभुजाकारं कनीयं स्मृतम्। सन्दर्भेऽस्मिन् विश्वकर्मा यथाविधि सर्वेषां प्रमाणान्यपि निर्दिष्टवान्।

एतेषां प्रमाणेषु भरतनाट्यशास्त्रस्य टीकाकारेषु दीर्घिमाविषये प्रायः मतैक्यमेव विद्यते परन्तु प्रथिम्नः विषये मतवैपरीत्यमपि दृश्यते। चतुरस्रस्य त्र्यस्रस्य वा प्रेक्षागृहस्य सर्वे भुजाः समप्रमाणाः भवन्ति। विकृष्टे तु दीर्घता प्रथिम्नः द्विगुणतरा क्रियते।

हस्तदण्डप्रमाणसन्दर्भे प्राचीनाचार्यैः सूक्ष्मवैज्ञानिकप्रमाणमपि निर्दिष्टम्। अथ च तत्र सूक्ष्मात् सूक्ष्मं दीर्घाद्दीर्घं प्रमाणमपि विस्तरशः निर्दिष्टम्। तद्यथा—

प्रेक्षागृहाणां सर्वेषां तच्चैवं हि निबोधत।
अणुः रजश्च बालश्च लिक्षा यूका यवस्तथा॥
अङ्गुलं च तथा हस्तो दण्डश्चैव प्रकीर्त्तितः।
अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ बाल उच्यते॥
बालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाऽष्टकं भवेत्।
यूकास्त्वष्टौ यवो ज्ञेयो यवास्त्वष्टौ तथांऽगुलम्॥
अंगुलानि तथा हस्तश्चतुर्विंशतिरुच्यते।
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः॥

रजसि अष्टाणवः, बालेऽष्टौ रजांसि, लिक्षायामष्टौ बालाः, यूकायामष्टौ लिक्षाः, यवे त्वष्टौ यूकाः, अङ्गुले त्वष्टौ यवाः, हस्ते तु चतुर्विंशत्यङ्गुलानि, दण्डे तु चत्वारः हस्ताः भवन्ति। अयं

दण्डः वर्तमानकालिकद्विगजसमानप्रायप्रमाणो भवति। प्रमाणेना-ऽनेन वर्तमानगजस्य १२५८२९१२ तथा च दण्डस्य २५१६५८२४ समसूक्ष्मतमाऽणुविभागाः भवन्ति। एवं त्रयाणां ज्येष्ठमध्यमावर-प्रेक्षागृहाणां भरतमुनिना सम्यङ्निर्देशः कृतः। तेषु मध्यमं प्रेक्षागृ-हमभिनयदृष्ट्या सर्वोत्तमं स्वीकृतम्।

अनेन प्रमाणेन वक्ष्यामि विनिर्णयम्।
चतुष्षष्ठिकरान्कुर्याद्दीर्घत्वेन तु मण्डपम्॥
द्वात्रिंशतं तु विस्तारान्मर्त्यानां यो भवेदिह।
अत ऊर्ध्वं न कर्त्तव्यः कर्तृभिर्नाट्यमण्डपः॥

उपर्युक्तप्रमाणविधिना मानवानां कृते निर्मितस्य मध्यमनाट्य-मण्डपस्य विस्तारः चतुःषष्ठिकरप्रमाणः, प्रथिमा च द्वात्रिंशत्कर-प्रमाणा भवति। सामान्यैर्जनैः एतावति दीर्घे प्रेक्षागृहे कठिनता-ऽनुभूयते—

यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति।
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चरितस्वरम्॥

विस्तृते विशाले वा नाट्यमण्डपे दर्शकानां बाहुल्येन विकीर्ण-त्वेन वा नाट्यम् अस्पष्टतामगम्यतां वा प्राप्नोति। उच्चरितध्वनि-रपि सुखश्राव्या न भवति।

अनभिव्यक्तवर्णत्वाद् द्विस्वरत्वं भृशं व्रजेद्।
यश्चाप्यस्यगतो भावो नानादृष्टिसमन्वितः॥

यदा श्रोता शब्दस्य सम्यक् श्रवणं ज्ञानं वा प्राप्तुं न शक्नोति तदा सः विविधैः स्वशरीरचेष्टितैः स्वाऽसन्तोषं प्रकटयति। प्रेक्षा-

गृहं गत्वा सः यस्य मनोरंजनस्य आत्मसुखस्य वा कल्पनां करोति तदप्राप्य काञ्चिन्निराशामेवाऽनुभवति ।

> स वेश्मनः प्रकृष्टत्वाद् व्रजेदव्यक्ततां पराम् ।
> प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते ।।
> यस्माद् वाद्यञ्च गेयञ्च सुखश्राव्यतरं भवेत् ।।
>
> नाट्यशास्त्र २/८-२५

यावत्प्रेक्षागृहं विशालं भवति प्रेक्षकाणां नाट्यगीतरसानुभूतौ श्रमाधिक्यं भवति । कनीयसि च रंगनाट्यविषयकाः समस्याः उत्पद्यन्ते । एतद्विचार्य त्रयाणां प्रेक्षागृहाणां मध्ये मध्यममेव सर्वोत्तमं मतं प्राचीनाचार्यैः । तत्र वाद्यं गेयं गीतञ्च सहजसुखश्राव्यं भवति ।

प्राचीनयूनानदेशीयानि प्रेक्षागृहाणि बहुविस्तृतान्यासन् । नटाः स्वविविधचेष्टाप्रदर्शनाय भिन्नाकृतिमयैः कृत्रिममुखैः सह दर्शकानां समक्षं स्वाभिप्रायं प्रकटितवन्तः । ट्रेजेडी-कामेडीति नामकेषु दुःखान्तेषु सुखान्तेषु वा नाटकेषु भिन्नप्रकाराणि कृत्रिममुखानि प्रयुज्यन्ते स्म । प्रेक्षागृहेषु सुविस्तृतेषु सत्सु प्रेक्षकाः पात्राणां नाट्यं सम्यङ्नाऽवबोधन्ति स्म । एथेन्सनगरे प्रसिद्धे 'दि योनिसस' प्रेक्षागृहे २७००० प्रेक्षकाणामासनप्रबन्ध आसीत् । एतादृशीमेव कठिनतां पूर्वंत एव विचार्य आचार्यभरतमुनिना मध्यमं प्रेक्षागृहमेव सर्वोत्तममिति प्रतिपादितम् ।

अस्य मध्यमप्रेक्षागृहस्य महत्वं प्रतिपादयन् तस्याऽन्तः निर्मितानां नेपथ्य-रंगपीठ-रंगशीर्षाणां विधानमपि स सम्यक् प्राकटयत् ।

हस्तप्रमाणेन मध्यमविकृष्टप्रेक्षागृहस्य दीर्घिमा (६४) चतुष्षष्ठि-हस्तमिता, प्रथिमा च (३२) द्वाविंशतिहस्तप्रमिता भवेत् । तत्र च प्रेक्षागृहस्य सूक्ष्मप्रभेदाः एवं वर्णिताः—

चतुष्षष्ठिकरान्कृत्वा द्विधा कुर्यात्पुनश्च तान् ।
पृष्ठतो यो भवेद् भागो द्विधाभूतस्य तस्य तु ॥
तस्यार्धविभागेन रंगशीर्षं प्रकल्पयेत् ।
पश्चिमेऽथ विभागे नेपथ्यगृहमादिशेत् ॥

चतुष्षष्ठिहस्तप्रमाणा भूमिः सम्यङ्मापयित्वा विभागद्वये विभज्येत । पश्चाद्वर्त्ती भागः रंगमंचः, अग्रवर्त्ती च भागः प्रेक्षकाणामासनार्थं नियतो भवति । पुनःरंगमंचमपि द्विधाकुर्यात्-तत्र चाग्रवर्ती भागः रंगपीठनामकः स्यात् पश्चाद्वर्ती भागः रंगशीर्षः भवेत् । अथ च यदि पश्चाद्वर्त्तिनं भागमपि पुनः द्विधा कुर्यात् तत्राग्रिमो भागः रंगशीर्षनामा स्यादवशिष्टस्तु नेपथ्यम् भवेत् । एवं चतुष्षष्ठि-(६४) हस्तप्रमिते मध्यमविकृष्टप्रेक्षागृहे अग्रवर्तिनि द्वाविंशति-मिते रंगमंचभागे द्विधाकृतोऽग्रिमः रंगपीठभागः षोडशहस्तप्रमितः, उत्तरश्च षोडशहस्तप्रमितो रंगशीर्षः स्यात् । रंगशीर्षभागे द्विधाकृते अष्टहस्तमित एव भागः रंगशीर्षः तदुत्तरश्चाष्टहस्तमितो भागः नेपथ्यनाम्नाऽभिधेयः स्यात् । 'नेपथ्यं' तद्यत्र रंगशीर्षस्य यवनिका-पृष्ठे सर्वेऽभिनयकर्त्तारस्तत्सहायकाश्च पात्रविशेषाः नाट्यार्थं सज्जाः भवन्ति, परिधानं परिदधति, अन्यां वा व्यवस्थां सम्पादयन्ति । यस्मिन् स्थलविशेषे नाट्यं सम्पाद्यते तद् रंगपीठम् इति प्रसिद्धम् । तयोर्मध्ये यत्राऽभिनेतारः विश्रामं लभन्ते तद् रंगशीर्षम्

इत्यभिधीयते ।

अस्य सर्वोत्तमस्य मध्यमविकृष्टप्रेक्षागृहस्य भरतनाट्यशास्त्रे यथा विस्तारप्रमितिवर्णनम् उपलभ्यते, तथा चतुरस्रस्य त्र्यस्रस्य वा प्रेक्षागृहस्य यद्यपि न प्राप्यते वर्णनम्, पुनरपि लब्धसंकेतनिर्देशैरेतयोरपि परिमाणविधानं समीक्ष्यते । चतुरस्रप्रेक्षागृहाणां सन्दर्भे भरतस्य मतमेवम्—

यो विधिः पूर्वमुक्तस्तु लक्षणं मंगलानि च ।
विकृष्टे तान्यशेषाणि चतुरस्रेऽपि कारयेत् ॥
चतुरस्रं समं कृत्वा सूत्रेण प्रविभज्य च ।
बाह्यतः सर्वतः कार्या भित्तिः श्लिष्टेष्टका दृढा ॥
तत्राऽऽभ्यन्तरतः कार्या रङ्गपीठे यथादिशम् ।
दश प्रयोक्तृभिः स्तम्भाः शक्ताः मण्डपधारणे ॥

नाट्यशास्त्रम् २/९४-९६

विकृष्टप्रेक्षागृहस्य सन्दर्भे यो हि निर्माणविधिः विहितः, यानि च लक्षणानि वर्णितानि, तानि सर्वाण्येव चतुरस्रप्रेक्षागृहस्य सम्बन्धेऽपि मन्तव्यानि । चतुरस्रप्रेक्षागृहं परितः समीकृता भूमिः सूत्रेण प्रविभज्येत । तद्बाह्यतः इष्टकानां स्थिरा समभित्तिः कल्प्येत । तत्राऽऽभ्यन्तरतः अन्तरतो वा रंगपीठसमीपे दिशानुकूलं मण्डपधारणे सक्षमाः दश स्तम्भाः परिकल्पनीयाः ।

अनेन मध्यमचतुरस्रप्रेक्षागृहस्य परिमाणेनैवं कल्पयामः । एतद् (३२) द्वाविंशद्धस्तप्रमितं दीर्घिमाप्रथिमायुतं समं वर्गाकारं भवति तस्याग्रिमे (१६) षोडशहस्तपरिमिते भागे प्रेक्षकाणामासनगृहं

भवेत् । पश्चाद्वर्त्तिनि (१६) षोडशहस्तपरिमिते भागे च रंगमंचः स्यात् । तत्र रंगमञ्चस्याऽग्रिमोऽर्धभागोऽष्टहस्तमितो रंगपीठः, पश्चिमश्चाष्टहस्तमितो ऽर्धभागो नेपथ्यरंगशीर्षरूपो निर्धारितः । अस्मिन् भागे हस्तचतुष्टयमितोऽग्रवर्ती रंगशीर्षः, शेषः पश्चवर्ती नेपथ्यमिति । तद्यथा—

(१)

मध्यमविकृष्टप्रेक्षागृहम्

३२

क घ

३२

३२ × ३२

दर्शकानामासनगृहम्

च छ

१६ × ३२ रंगपीठः

प फ

८ × ३२ रंगशीर्षः

त थ

८ × ३२ नेपथ्यम्

ख ग

(२)

मध्यमचतुरस्रप्रेक्षागृहम्

३२

क घ

१६

१६ × ३२ दर्शकदीर्घा

च छ

८ × ३२ रंगपीठः

प फ

४×३२ रंगशीर्षः

त थ

४ × ३२ नेपथ्यम्

ख ग

उपर्यङ्कितयोः चित्रयोः प्रथमे मध्यमविकृष्टप्रेक्षागृहस्य, द्वितीये च मध्यमचतुस्रप्रेक्षागृहस्य स्वरूपं वर्णितम् । उभयत्र प्रेक्षागहृस्वरूपं क ख ग घ इति रेखाङ्कितम् आयताकारं वर्गा-

गारं वा विद्यते । प्रथमे चित्रे क—ख रेखा (६४) चतुष्षष्ठि-हस्तमिता, ख—ग रेखा (३२) द्वात्रिंशद्धस्तप्रथिता, द्वितीये तु क–ख, ख–ग, ग–घ, घ–क इति सर्वा अपि रेखाः (३२) द्वात्रिंशद्धस्तप्रमाणा एव वर्तन्ते ।

चित्रयोरुभयोः च–छ रेखा क–ख, ग–घ रेखयोः मध्येस्थिता, एवं क—च, छ—घ प्रेक्षकाणामासनगृहम्, च—ख, ग–छ मध्ये रंग-मंचः । पुनश्च प—फ रेखा, च—ख, छ—ग. रेखयोः मध्यबिन्दुः, एवं च--प फ--छ मध्ये रंगपीठः, प–ख, ग–फ मध्ये रंगशीर्षः । पुनश्चास्य रंगशीर्षस्य यदि द्वौ भागौ क्रियेते, तदा त–थ रेखा प--ख, ग--फ रेखयोः मध्ये स्यात्, तदानीञ्च त–ख, ग–थ मध्ये नेपथ्यम्, प--त, थ—फ मध्ये 'रंगशीर्षः' भवेत् ।

एवं विकृष्टचतुरस्रनाट्यमण्डपयोः निर्मितिविधौ परिमितेः विस्तृतं विवेचनं कृत्वा नेपथ्यरंगशीर्षरंगापीठप्रभृतीनां विशिष्टस्था-नानां निर्माणविधिरपि सुस्पष्टं वर्णितः । भरतनाट्यशास्त्रेऽनेन सहैव त्र्यस्रनाट्यमण्डपस्याऽपि विस्तृता विवेचना विद्यते ।

अष्टौ स्तम्भान् पुनश्चैव तेषामुपरि कल्पयेत् ।
विद्धाऽऽस्यमष्टहस्तं च पीठं येषु ततो न्यसेत् ॥

नाट्ये स्थिरं मण्डपं निर्मातुं षड् स्तम्भाः स्थापनीयाः । पुन-स्तेषामुपरि अष्टौ स्तम्भाः सावधानतया निर्मातव्याः । तेषामुपरि प्रदेशे रंगपीठं निर्मातव्यम्, अष्टहस्तप्रमाणं मुखन्तस्य विद्धं स्यात् ।

तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे ।
धारणीधारणास्ते शालस्त्रीभिरलङ्कृताः ॥

अत्र नाट्यगृहस्य निर्माणविधिः सम्यग् वेतृभिः प्रयोक्तव्यः। मण्डपस्य धारणार्थं स्थिरीकरणार्थञ्च स्तम्भाः यथास्थान निर्मातव्याः। शालभञ्जिकाभिः संयुतास्तत्र धारणीधारणाः (शहतीर इत्याख्याः) अपि स्थापनीयाः। शालस्त्रियः, शालभञ्ज्यः, शालभञ्जिकाः वा काष्ठमय्यः कान्ताप्रतिकृतयः प्रमदानां मूर्तयः एव भवन्ति।

नेपथ्यगृहकं चैव ततः कार्यं प्रयत्नतः।
द्वार चैकं भवेत्तत्र रंगपीठप्रवेशनम्॥
जनप्रवेशनं चैवमाभिमुख्येन कारयेत्।
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु॥

एतादृशं स्थिरं दृढं नाट्यमण्डपं निर्माय नेपथ्यगृहमुपस्थापयितव्यम्। तत्रैकेन द्वारेण रंगपीठे प्रवेशो भवेत्। यः कोप्यभिनेता नेपथ्याद् रंगपीठं प्रवेष्टुम् इच्छेत्, तेनैव द्वारेण दर्शकानभिमुखीभूय प्रविशेत्। द्वितीयं द्वारं रंगस्य समक्षं भवेत्।

अष्टहस्तन्तु कर्तव्यं रङ्गपीठं प्रमाणतः।
चतुरस्रं समतलं वेदिकासमलंकृतम्॥

चतुरस्रे प्रेक्षागृहे रंगपीठम् अष्टहस्तप्रमाणं वर्गाकारं भवेत्। तस्मिन् सज्जायुक्ता समतला वेदिका धरणीतलात् किञ्चिदुच्चा भवेत्।

पूर्वप्रमाणनिर्दिष्टा कर्तव्या मत्तवारणी।
चतुःस्तम्भसमायुक्ता वेदिकायास्तु पार्श्वतः॥

अस्मिन् प्रेक्षागृहे यथाविधि परिमाणाऽनुकूलं मत्तवारणी प्रकर्त्तव्या। सा च वेदिकायाः पार्श्वे चतुःस्तम्भसमायुक्ता भवेत्।

समुन्नतं समं चैव रङ्गशीर्षन्तु कारयेत् ।
विकृष्टे तून्नतं कार्यं चतुरस्रं समं तथा ॥

रंगशीर्षवेदिका मत्तवारण्याः किञ्चिदुच्चतरा स्यात् विकृष्टे प्रेक्षागृहे, चतुरस्रे सा समानाऽपि भवितुमर्हति ।

एवमेतेन विधिना चतुरस्रं गृहं भवेत् ।
अतः परं प्रवक्ष्यामि त्र्यस्रगेहस्य लक्षणम् ॥

एवमाचार्यो भरतः नाट्यशास्त्रे विकृष्टचतुरस्रप्रेक्षागृह-परिमाणनिरूपणानन्तरम् अस्माकं ध्यानं त्र्यस्यप्रेक्षागृहनिर्माण-विधिं प्रत्याकर्षति ।

त्र्यस्रं त्रिकोणं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ।
मध्ये त्रिकोणमेवाऽस्य रङ्गपीठञ्च कारयेत् ॥

प्रेक्षागृहनिर्मातृभिः त्र्यस्रप्रेक्षागृहमण्डपं त्रिकोणाकृति एव कल्पनीयम् । तस्य मध्ये रङ्गपीठमपि त्रिकोणाकृति एव निर्मातव्यम् । रंगपीठादवशिष्टे प्रेक्षागृहभागे रङ्गशीर्षं, नेपथ्यं, प्रेक्षकाणामासनस्थानं च प्रकल्प्यम् ।

द्वारं तेनैव कोणेन कर्त्तव्यं तस्य वेश्मनः ।
द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्ठतः ॥ नाट्य० २/१०९

अस्य प्रेक्षागृहस्य द्वारं तेनैव कोणेन कर्त्तव्यम् । अन्यच्च द्वार रङ्पीठस्य पीठस्थले भवेत् । अत्र "तेनैव कोणेन" इति पदस्याऽभिप्रायोऽस्पष्ट एव प्रतिभाति । आचार्याऽभिनवगुप्तमतेन प्रेक्षकाणां वारुणीगतेन जनप्रवेशनद्वारं भवेत् ।

विधिर्यश्चतुरस्रस्य भित्तिस्तम्भसमाश्रयः ।
स तु सर्वः प्रयोक्तव्यः त्र्यस्रस्याऽपि प्रयोक्तृभिः ॥

नाट्य० २/११०

विकृष्टचतुरस्रप्रेक्षागृहाणां सन्दर्भे यो भित्तिस्तम्भनिर्माण-विधिः वर्णितः तथैवाऽस्य सम्बन्धेऽपि वेद्यः । एवमिदं त्र्यस्रमण्डपं समत्रिबाहु त्रिभुजाकारं निर्मातव्यम् । यस्य मध्ये नेपथ्य-रंगशीर्ष-रंगपीठान्यपि यथास्थानं भवेयुः । मध्यमाऽऽकारमिदं प्रेक्षागृहं (३२) द्वात्रिंशद्धस्तपरिमितं समबाहु त्रिभुजं भवति । तद्यथा —

त्र्यस्रं प्रेक्षागृहम्




अस्मिन् चित्रे क—ख—ग इति रूपेण समत्रिबाहु त्रिभुजं त्र्यस्र-प्रेक्षागृहस्वरूपं वर्तते, यस्मिन् क—ख, ख—ग, ग—क रेखाणां मध्ये च छ ज इति मध्यविन्दवः । पुनश्च कछयोर्मध्ये टः मध्यबिन्दुः, अथ च कचयोर्मध्ये तः, कजयोर्मध्ये थः मध्यविन्दुः एवं त्रिभुजं

क—त—थ रेखान्तर्गतं नेपथ्यम्, त—थ—ट मध्यगतं त्रिभुजाकार-मेव रंगशीर्षस्थलम्, त—ट—थ—ज—ठ—च मध्यगतं षट्कोणन्तु रंगपीठम्, अथ चाऽवशिष्टं पञ्चकोणं च—ठ—ज—ग—ख मध्यगतं प्रेक्षकाणामासनगृहं चेति ।

अस्मद्देशीयानां प्रेक्षागृहाणां महत्वं रंगशीर्षनिर्मित्या विशेषतया प्रकटीभवति । तत्र व्यवहृतचातुरीप्रभावात् पात्राणां गमनागमनयोः रहस्यं प्रेक्षकाणां समक्षे सरलतया न प्रकटी-भवति । कतिपये पदार्थाः इयन्तः आवश्यकाः सन्ति, येषां भावो नाट्यमञ्चने परमावश्यको भवति । अस्य रंगशीर्षस्य सहायतया एव तेषां स्थापनव्यवस्था सम्भवति । अस्मद्देशीयेषु नाटकेषु बहवो दृश्याः एतादृशाः भवन्ति, यत्र हि स्वर्गपातालौ एकरूपौ जायेते । योरोपीयदेशीयाः विद्वांसः एतान् नाट्यदृष्ट्या अनावश्य-कान्, मञ्चनेऽसम्भवान् वा मन्यन्ते । किन्तु "प्रयत्ने कृते न किञ्चिदपि असम्भवम्" इति धिया भारतीयाः तेषां मञ्चने काठिन्यमनुभवन्तोऽपि सर्वविधदृश्यान् नाट्येऽवतारयितुं प्रायतन्त एव । रंगशीर्षस्य द्विभूमिकल्पनया च ते सहजाऽभिनेयाश्च सम्पद्यन्ते । उपरितः अट्टालिकाप्रदेशादधःप्रदेशमागच्छन्नटः उत्पतनस्याऽनुकृतिं कर्तुं शक्नोति । नाट्यशास्त्रे द्विभूमिवन्ति नाट्यगृहाण्येवं वर्णितानि ।

कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ।
मन्दवातायनोपेतो निर्वातो धीरशब्दवान् ।। नाट्य० २/८७

प्रेक्षागृहाणां द्वे भूमी (द्वौ खण्डौ) अधस्तलम्-अट्टालिका-रूपञ्चेति स्याताम्, तेषाञ्चाकारः पर्वतस्य गुहासदृशो भवेत् । तत्र

वातायनानि अपि यथाविधि निर्मितानि भवेयुः । यैः वायुप्रवेशो नियन्त्रितप्रसारः आवश्यकताऽनुगुणं स्यात् । प्रचण्डो वायुस्तत्र न प्रवेष्टुं शक्नुयात् इति, तत एव नाट्यमण्डपः मन्दवातायनोपेतः धीरशब्दवान् भवेत् इति ।

रंगपीठस्य समीपे परमावश्यकसामग्रीप्रस्थापनार्थं मत्तवारण्याः अपि निर्माणस्य विधानं शास्त्रे कृतम् । तस्या आकृतिः वेदिका-सदृशी भवेत् । यथाचोक्तम् —

रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारणी ।
चतुःस्तम्भसमायुक्ता रंगपीठप्रमाणतः ॥
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी ।
उत्सेधेन तयोस्तुल्यं कर्तव्यं रंगमण्डपम् ॥

रंगपीठस्य पार्श्वे परिमाणे च तत्तुल्या एव, चतुर्भिः स्तम्भैः समायुक्ता मत्तवारणी निर्मातव्या । भूमिप्रदेशाद् अस्याः उच्चता सार्द्धहस्तपरिमिता भवेत्, उभयोः पार्श्वयोश्च तस्याः उच्चता समानैव भवेत् ।

तस्मिन्नवसरे वर्णव्यवस्थासिद्धान्ताः अतिकठिनाः सुदुष्करा-श्चासन् । तदानीं हि प्रेक्षागृहे तेषां प्रेक्षकाणां ब्राह्मणक्षत्रियादि-क्रमेण आसनस्थलानि नियतानि भवन्ति स्म । नाट्यशास्त्रे भरत-मुनिः प्रक्रियायाश्चास्याः विस्तृतं विवेचनं कृतवान् । वर्णानुगुणं स्थाननिर्देशार्थं पृथक्-पृथक् स्तम्भा भूमौ स्थाप्यन्ते स्म । येषां वर्णभेदसूचिका रागसज्जा पृथक् २ भवति स्म । तदर्थञ्च वर्णभेद-सूचकानां रागाणां (रंगवर्णानाम्) अवलिप्तिः स्तम्भेषु क्रियते स्म । यथा —

प्रथमे ब्राह्मणे स्तम्भे सर्पिःसर्षपसंस्कृते ।
सर्वशुक्लो विधिः कार्यो दद्यात्पायसमेव च ।।

शुभे सूर्योदयकाले प्रथमं ब्राह्मणानां कृते स्तम्भानां संस्थापनां कुर्यात् । घृतसर्षपेण तान् सम्यक् संशोध्य तेषु यथाविधि श्वेतवर्णस्य सज्जां च विदधीत । सम्पन्ने चाऽस्मिन् विधाने स्वशक्त्यनुसारं ब्राह्मणेभ्यः पायसं दद्यात् इति ।

चन्दनं च भवेद् ब्राह्मं क्षात्रं खदिरमेव च ।
धवाख्यं वश्यवर्णं स्याच्छूद्रं सर्वद्रुमैः स्मृतम् ।।

ब्राह्मणस्तम्भं चन्दनदारुणा, क्षत्रियस्तम्भं खदिरकाष्ठेन, वैश्यस्तम्भं धवेन, तद्वत् शूद्रस्तम्भमवशिष्टानां सर्वद्रुमाणां काष्ठेन निर्मापयेत् इति नाट्यशास्त्रविधानम् ।

ततश्च क्षत्रियस्तम्भे वस्त्रमाल्याऽनुलेपनम् ।
सर्वरक्तं, प्रदातव्यं द्विजेभ्यश्च गुडौदनम् ।।

तदनन्तरं क्षत्रियाणां कृते स्थानविशेषसूचके प्रेक्षागृहान्तर्निर्मिते स्तम्भे रक्तवर्णैः वस्त्रैः माल्यानुलेपनादिभिश्च विशिष्टा सज्जा विधेया । अथ च द्विजेभ्यः गुडौदनं वितरणीयम् ।

वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे ।
सर्वं पीतं, प्रदातव्यम् द्विजेभ्यश्च घृतौदनम् ।।

प्रेक्षागृहस्याऽन्तः पश्चिमोत्तरे दिग्विभागे वैश्यस्तम्भस्य स्थापनां कुर्यात् । तस्य हि विनिर्माणे पूर्वोक्ताः सर्वे पदार्थाः पीतवर्णेन सज्जयितव्याः । तस्मिन्नवसरे च द्विजेभ्यः घृतसंयुतमोदनं वितरणीयम् ।

शूद्रस्तम्भे विधिः कार्यः सम्यक् पूर्वोत्तराश्रये ।
नीलप्रायं प्रयत्नेन कृशरा च द्विजाशनम् ।।

पूर्वोत्तरे कोणे शूद्राणां स्थानसूचकं स्तम्भं संस्थाप्य नील-वर्णेन तं रञ्जयेत् । अन्यांश्च सकलान् पदार्थान् तत्र नीलवर्णेनैव सज्जयेत् । एवं स्तम्भस्थापनाकृत्ये सम्पन्ने द्विजेभ्यः भोजनार्थं कृशरां प्रदद्यात् ।

पूर्वोक्ते ब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने ।
निक्षिपेत् कनकं मूले कर्णाभरणसंश्रयम् ।।

पूर्वोक्तस्य शुक्लमाल्यानुलेपयुतस्य ब्राह्मणस्तम्भस्य मूले कर्णा-भूषणसंश्रयं स्वर्णं निक्षिपेत् ।

ताम्रं चाऽधः प्रदातव्यं स्तम्भे क्षत्रियसंज्ञके ।
वैश्यस्तम्भस्य मूले तु रजतं सम्प्रदापयेत् ।।

क्षत्रियाणां कृते निर्मितस्य स्तम्भस्य मूले ताम्रम् वैश्यानां च कृते विनिर्मितस्य स्तम्भस्य मूले रजतं निक्षिपेत् ।

शूद्रस्तम्भस्य मूले तु दद्यादायसमेव च ।
शेषेष्वपि च निक्षेप्यं स्तम्भमूलेषु काञ्चनम् ।।

शूद्रस्तम्भेषु मूलं लौहमायसयुक्तं प्रकल्पयेत् । शेषेषु सर्वेष्वव-शिष्टस्तम्भमूलेषु स्वार्हतानुसारं सुवर्णं संस्थापयेत् ।

संक्षेपतः चन्दननिर्मितस्य ब्राह्मणस्तम्भस्य मूले सुवर्णम्, खदिर-निर्मितस्य क्षात्रस्तम्भस्य मूले ताम्रम्, धवनिर्मितस्य वैश्यस्तम्भस्य मूले रजतं निक्षिपेत् । शूद्रस्तम्भनिर्माणार्थं कस्यचिद् वृक्षविशेषस्य विधानं नास्ति । लौहं तस्य मूलं स्वकाठिन्येन ध्रुवं करोति ।

एवमाचार्यभरतमुनिमतेन प्रेक्षागृहेषु स्तम्भनिर्माणपद्धतिः सम्यक् पर्यालोचिताऽस्माभिः । स्तम्भनिर्माणात्पूर्वं भित्तिरपि कल्पनीया भवति । नाट्यशास्त्रस्येदं प्रकरणं शालाभवन-निर्माणे वनसम्पदायाः वृक्षदारूपयोगे विस्तरशः वर्णनं प्रस्तौति । चन्दन-खदिरधववृक्षाणां दारुभिः क्रमशः ब्राह्मणक्षत्रियवैश्यस्तम्भनिर्माणे विशिष्टं विधानं विहितं वर्तते । एषां त्रयाणामपि वृक्षविशेषाणां दारु नूनमेवातिमहत्वपूर्णं भवति ।

सम्प्रत्यपि गृहस्तम्भानां, नित्यं व्यवहारार्थं गृहोपकरणानां (फरनीचर इति) वा निर्माणे यादृग् दारु प्रयुज्यते, तस्मिन्नपि विष-येऽयमार्षादेशो विशेषतया विचारणीय एव । ब्राह्मणक्षत्रियवैश्य-स्तम्भनिर्माणार्थं प्रयुक्तानां चन्दनखदिरधववृक्षाणां काष्ठानि क्रमशः श्वेतरक्तपीतवर्णैरेव सज्जनीयानि । वर्तमानकाले सालस्य, शिंशपस्य, खरपत्रस्यार्जुनोपमस्य (सागवान वा टीक इति) पर्वतीयप्रदेशेषु समुत्पन्नानां सरदेवदारूणां होलकवसुवृक्षाणांवा काष्ठं प्रायः एता-दृशानामुपकरणानां निर्माणे प्रयुज्यते ।

काश्मीरप्रदेशेषु नौकागृहाणि ( हाउसवोट्स ) ईदृशेनैव काष्ठेन निर्मीयन्ते । सर्वदारूणां मध्ये चन्दनं श्वेतं सर्वोत्तमं सर्वा-धिकमूल्यवच्च भवति । प्रसाधनोपकरणनिर्माणार्थमस्य विशिष्टं महत्वं वर्तते । ब्राह्मणस्तम्भोऽप्यनेनैव निर्मीयते । यदि कस्यचिद् बहुमूल्यस्य भवनस्य निर्माणार्थमल्पमपि चन्दनं प्रयुञ्जीत, तर्हि तद्भवनं चिरकालस्थायि विषयुक्तकीटानां विनाशकं च भवेत् ।

वर्तमानकालेऽमरीकाजापानप्रभृतिदेशेष्वपि दारुगृहाणि निर्मी-यन्ते । रोजवुडकाष्ठं रक्तं सरलं चीड अथवा पाइन इत्याख्यं

पीतवर्णं श्वेतवर्णं च भवति, यस्य काष्ठेन विविधान्युपकरणानि निर्मीयन्ते । अतिबृहतां समुद्रीयनौकानां विनिर्माणे काष्ठस्य प्रयोगः सुविदित एव । अस्मिन् सन्दर्भे भरतमुनिनिर्दिष्टानां श्वेतरक्तपीतवर्णानां वृक्षविशेषाणां दारु कियदुपयोगि भवतीति विशेषतया गवेषणीयम् ।

ब्राह्मणस्तम्भस्य मूले स्वर्णस्य, क्षत्रियस्तम्भस्य मूले ताम्रस्य, वैश्यस्तम्भस्य मूले रजतस्य शूद्रस्तम्भस्य मूले त्वायसस्य प्रक्षेपणमाश्यकं विहितम् । आधुनिकाभियान्त्रिकीकलायाम् इष्टपाषाणभवनानां निर्माणे स्पातायसमात्रमेव प्रयुज्यते । पुरा हि आचार्याः स्वर्णरजतताम्राणामुपयोगं कथं निर्दिष्टवन्तः इत्यत्रास्ति विचारणीयम् । स्वर्णस्य विशिष्टं महत्वं वर्तते । दारुस्तम्भानां विनिर्माणस्य प्रसंगो वर्तते न तु इष्टपाषाणां विशालतमभवनानामिति सम्यगवबोधनीयं विद्वद्भिः । स्वर्णरजतताम्रधातूनां विशिष्टाः गुणाः नोपेक्षणीयाः । स्वर्णपात्रे न कश्चिद् विषाक्तः कीटाणुः प्रभवितुमर्हति । रजतताम्राणां पात्राणि संक्रमणं बहुलतया दूरीकुर्वन्ति । काष्ठस्तम्भेषु यदि धातूनामेतेषां लवोऽपि भवेच्चेत् संक्रामकजन्तवः तान् अनेक शताब्दिपर्यन्तं दूषयितुं न प्रभवेयुः । जापानामेरिकासदृशदेशेषु दारुभवनानां स्थितिं संलक्ष्य विचारणीयं यदिदमार्षवाक्यं कियदुपयोगीति । इष्टपाषाणानां भवनेष्वेतेषां धातूनां प्रयोगः विशिष्टमंगलस्य हेतुर्भवेत् ।

एवं भरतनाट्यशास्त्रमतेन शालाकर्मविधौ स्तम्भनिर्माणपद्धतौ काष्ठोपयोगं पर्यालोचितम् । आचार्यभरतमुनीनां मननानि




कियन्ति सारपूर्णान्यासन् इति सम्यगवबुध्यत एत्र मनीषिभिः। काव्यप्रकाशे रसनिष्पत्तिसिद्धान्तविवेचनाप्रसङ्गे ऽस्यैव नाट्यशास्त्रस्य "विभावाऽनुभावसंचारिभावसंयोगाद् रसनिष्पत्तिः" इति वाक्यार्थविचारणायां यथा भट्टलोल्लट–शंकुक–भट्टनायकाऽभिनवगुप्ताचार्याः स्वविशिष्टमतवैपरीत्येन भिन्नां भिन्नामेव व्याख्यां विवेचनां वा प्रकटयामासुः–तद्वद् भरतमुनेः काष्ठोपयोगिसम्बद्धानि वाक्यान्यपि मननीयानि, गवेषणीयानि, विचारणीयानि विद्वद्भिः।

ब्राह्मणस्तम्भनिर्माणोपलक्ष्ये विद्वद्भ्यो द्विजेभ्यः पायसम्, क्षत्रियस्तम्भस्य गुडौदनम्, वैश्यस्तम्भस्य घृतौदनम्, शूद्रस्तम्भस्य च कृशरं वितरितव्यम्। सर्वेषां स्तम्भानां निर्माणोपलक्ष्ये व्रीहिः केनाऽपिरूपेण विदुषां मध्ये वितीर्येतेति पक्षः। नूनं प्राचीनकालादेवाऽस्माकं देशस्य शालिः धानं प्रधानं भोज्यमासीत् इति। धानस्यौदनस्य वा वितरणं समाजवादस्य प्रतीकमपि विद्यते। आर्थिकदृष्ट्या धनहीनोऽपि मनीषी अस्य सर्वसुलभपदार्थस्य वितरणे लेशमात्रमपि काठिन्यं नाऽनुभवति। साम्प्रदायिकीमेकतां स्थिरयितुं श्रीगणेशशंकरविद्यार्थीमहाभागः "हिन्दुस्तान बिरादरी" इति संस्थामारब्धवान्। यस्मिन् विभिन्नसम्प्रदायानां सदस्येषु सहभोजोऽनिवार्यः आसीत्–तत्र भोज्यरूपेण चणकस्य प्रयोजनमावश्यकमभवत्। अतः सामान्यसदस्योऽपि समाजे महनीयं धनसम्पन्नमपि जनं स्वगृहे आमन्त्रयितुं शक्तो भवति स्म, न स तत्र कथमपि संकोचमनुभवति स्म। नूनमेव विद्यार्थिमहाभागस्य सिद्धान्तेऽस्मिन् आचार्यभरतमुनेः संदेशः परोक्षरूपेण सन्निहितोऽभवदिति।

एवमाचार्यभरतमुनिना निर्देशिते प्रेक्षागृहे विभिन्नवर्णानामासनार्थं पृथक् पृथक् स्थानविधानं वर्त्तते। प्रेक्षागृहस्य पूर्वभागे राज्ञः आसनं भवति स्म। तद्वामतः मन्त्रिणां ज्योतिर्विदां कविजनानां वणिजां वा कृते, दक्षिणतश्च स्त्रीणां बालिकानां वाऽऽसनस्थितिरभवत्। उत्तरस्यां राजपुरुषाणां बालकानां कृते, दक्षिणस्यां च राजदूतानाम् आलोचकानां रक्षकाणां च कृते स्थानं वर्त्तते स्म। नूनमस्मद्देशीयो रंगः तादृशो विकसितः वैज्ञानिको विस्तृतरूपश्चासीत्, यस्य स्वरूपस्थितिः मानवसभ्यतायाः आदिमे विकासकालेऽपि उपलभ्यते, यद्दृष्ट्वा सकलविश्वजनीनाः विद्वांसः स्वमनसि तद्वैशिष्ट्यमनुभवन्तः आश्चर्याम्बुधौ निमज्जन्ति।

आधुनिकविन्ध्यप्रदेशे 'सीतावेंगा जोगीमारा' नामके विशिष्टे प्रसिद्धे स्थाने स्तः। स्वाधीनताप्राप्तेः प्राक् तत्र 'सरगूजा' नामकं पूर्वदेशीयं राज्यम् (भारतीय रियासत इति) आसीत्। तत्रोत्खननाऽभियानाऽवसरे आचार्यभरतमुनिनिर्दिष्टानि प्रेक्षागृहाणि प्रत्यक्षत एवोपलब्धानि।

१९०३–०४ ईस्वीये वर्षे भारतवर्षीयपुरातत्वविभागस्य सर्वेक्षणे उत्खननकार्यस्य वार्षिकविवरणे तत्रोपलब्धानां प्रेक्षागृहाऽवशेषाणां विस्तृतोल्लेखनं विद्यते। कस्मिंश्चित् शैलगुहाकारप्रदेशे नाट्यमण्डपस्य समाकृत्या विशिष्टं स्थलं समुपलब्धम्, यत् प्रेक्षागृहाऽवशेषमात्रमेव प्रतीयते।

यत्र च गुहान्तःप्रवेशार्थं वामतः सोपानपङ्क्तिर्विद्यते येषां साहाय्येन पात्रप्रेक्षकाः तदाभ्यन्तरं गन्तुं प्रभवन्ति स्म। एतस्यां सोपानपङ्क्तौ तिस्रः पादप्रक्षेपश्रेणयः विद्यन्ते, यासु प्रत्येका

२.३ मीटरविस्तृता १६ से० मी० प्रथिता च विद्यते । ताश्चोत्तरोत्तर ८५ सेन्टीमीटरमिता: उच्चतराश्च विद्यन्ते । तदग्रे मत्तवारण्यां द्वे छिद्रे अपि दृश्येते, वंशकाष्ठस्य स्तम्भान् स्थापयित्वाऽत्र प्रच्छदपटा: बध्यन्ते स्म, इत्यस्माकमनुमानम् । सम्मुखे प्रेक्षकाणामासनार्थं स्थानं वर्तते । एषा तद्यूनानदेशीयप्रेक्षागृहाणाम् (थियेटर) इव सोपानपङ्क्तिनिबद्धा वर्तते ।

अस्य खननकर्मण: परिणामस्वरूपं वयं कतिपयानि महत्वपूर्णानि प्रस्तरलेखान्यप्यपश्याम । तेषां मननात् केचिदतिमहत्वपूर्णास्तथ्या: प्रकटिता:, येन स्पष्टत: ज्ञायते यत्–'सुतनुका' नाम्नी दासी नर्तकानां कृते इमा: गुहा: निर्मापितवती । एतासां गुहानां लोमशमहर्षे: गुहाभि: सह तुलने इमा: समाना: इव प्रतीयन्ते । महाकवि: कालिदास: अश्वघोषश्च स्वकृतिषु प्रत्यपादयताम् यत् प्राक्तनकालादेव इमा: गुहा: मनोरञ्जनार्थं प्रयुक्ता: समभवन् । एतासां गुहानामन्तरेव सम्राज: महत: अशोकस्य ब्राह्मीलिप्यां लेखबद्धा: कतिपये शिलालेखा: अपि उपलब्धा:, यैश्च सिध्यति यद् येषां प्रेक्षागृहाणामिमेऽवशेषा:, तानि प्रेक्षागृहाणि ३०० ईस्वीयाब्दत: पुरा एव निर्मितान्यभवन् ।

यदा वयमाचार्यभरतमुने: नाट्यशास्त्रे वर्णितानां विकृष्टप्रेक्षागृहाणाम् एतासु गुहासूपलब्धै: नाट्यमण्डपै: प्रेक्षागृहाऽवशेषै: वा सह तुलनां कुर्मस्तदा तत्र विस्मयोत्पादिकां समतामेव पश्याम: । गुहान्तर्गतप्रदेशेषु एतेषां मण्डपानामुपलब्धि: "प्रेक्षागृहाणि शैलगुहाकाराणि" इति कथनस्य प्रत्यक्षमेव प्रमाणम् ।

एवं नूनमेव प्रतीयते यद् भरतमुने: काले नाटकानां गुहान्तर्गतेषु

प्रदेशेषु मञ्चनं भवति स्म-अतएव च मुनिना प्रतिपादितम् 'मण्डपाः शैलगुहाकाराः स्युरिति'। मण्डपान्तरेव प्रेक्षागृहेषु रंगविकासस्याऽपि विस्तृतं रूपं प्राप्तमभवत्। उत्खननपरिणामतः प्राप्तेष्वेतेषु, भरत-वर्णितेषु विकृष्टप्रेक्षागृहेषु च पर्याप्तमाकृतिसाम्यमुपलभ्यते। दीर्घि-मायाः प्रथिमायाश्चाऽनुपाते ६० सेंटीमीटरमात्रस्यैवाऽन्तरं केवलं विद्यते। यच्च भूगर्भीयपरिवर्त्तनवशात् (जियोलोजिकल आल्टरेशन वशाद्) अपि दीर्घावधौ भवितुर्महति।

परमयशस्विनः सम्राजः हर्षवर्धनस्य (६०६–६४८ ई०) राज्यपर्यन्तमेतस्याः नाट्यप्रणाल्याः सम्यक् प्रचारः आसीत्। शनैः शनैः अस्माकं देवदुर्लभे देशे यवनानां प्रभुत्वे जाते संस्कृतं प्रति राजकीयं प्रोत्साहन न्यूनं सदवरुद्धमिव जातम्। सर्वाभिः प्राचीन-कलाभिः सह रंगकलायाः अपि अधोगतिर्जाता। पर्वसु धार्मिकेष्व-सरेषु वा भगवतोः रामकृष्णयोः लीलायाः प्रचारमात्रमेव जनसामा-न्येऽवशिष्टं सत् प्रचलितम् अभवत्। एतन्निमित्तं रथ्यासु हट्टेषु अन्येषु वा स्थलेषु रिक्तं क्षेत्रमेव प्रेक्षकाणाम् आसनार्थं पर्याप्त-मासीत्। नाऽभूत्तदर्थमावश्यकता प्रेक्षागृहाणाम् यत्र मे लीले प्रस्तो-तव्ये स्याताम्।

पाश्चात्ययोरोपाऽमेरिकादेशैः सह भारतवर्षस्य सम्पर्कानन्तर-मस्मिन् देशे तद्देशीयरंगप्रणाल्यपि विकसिता जाता। विषया-न्तरेणालमतिविस्तरेण।

इति

ओ३म्

# प्राचीन विमान-विज्ञान पर अनूठा शोध-प्रबन्ध

महर्षि भरद्वाज प्रणीत—

## यन्त्र-सर्वस्व के वैमानिक-प्रकरण का विवेचनात्मक-अध्ययन

डा० प्रकाशमित्र शास्त्री, एम० ए०, पी-एच० डी०
साहित्यपुराणेतिहासाचार्य, विद्यावारिधि
(अध्यक्ष—संस्कृतविभाग, डी० ए० वी० इ० कालेज, कानपुर,



इस शोध-प्रबन्ध के अन्तर्गत प्राचीन विमान-विज्ञान के मूलाधार 'यन्त्र-सर्वस्व के वैमानिकप्रकरण" का आधार लेकर-प्राचीनतम पुष्पक-विमान, त्रिपुर-विमान तथा सौर-ऊर्जा व वायु-ऊर्जा से संचालित लोकलोकान्तरगामी अन्य विमानों की निर्माणशैली की सांगोपांग स्पष्ट सचित्र विवेचना प्रस्तुत की गई है। प्राचीन विमानों के निर्माण में प्रयुक्त होने वाली (विशिष्ट लौह) धातु की निर्माण-प्रक्रिया के वर्णन के साथ अन्तरिक्ष-यात्रा के मध्य सम्भावित वातसन्धि, वातावर्त या वातसंघर्षजन्य विषशक्तियों तथा ऋतुप्रभावजन्य या ग्रहोपग्रहों एवं उल्काओं के दुष्प्रभाव से आने वाली बाधाओं के निवारणार्थ अन्तरिक्ष-यान में प्रयुक्त यन्त्रों व अंगोपांगों का विशद वर्णन प्रस्तुत किया गया है।

सूर्य-किरणों से प्राप्त ऊष्मा को यानचालक शक्ति (विद्युत्) के रूप में परिणत करने वाले यन्त्र-विशेष "विद्युदागार एवं गणपयन्त्र" की सचित्र प्रयोगपरक स्थिति का वर्णन निश्चय ही आश्चर्य में डाल देने वाला है।

यह शोध-प्रबन्ध प्रत्येक पुस्तकालय में संग्रह के योग्य तो है ही—साथ ही प्राचीन भारत के भौतिक-ज्ञान-विज्ञान के जिज्ञासु, तत्वान्वेषी, अनुसन्धाता जन के लिये भी विशेष रूप से पठनीय, मननीय एवं संग्रहणीय है।

**अपने लिये प्रतियाँ आज ही मंगायें।**

साथ में पृष्ठांकित प्रकाशन की अन्य पुस्तकों के लिए भी लिखें।

**शिक्षक-प्रकाशन**
प्रेमनगर, कानपुर

**अवस्थी**
प्रबन्धक

# अंशुमद्ग्रन्थमालायां प्रकाशिता

| ग्रन्थ | लेखक | मूल्य |
|---|---|---|
| १. नैषधीयचरितम् (प्रथमः सर्गः) | [प्रो० शिव<br>डा० प्रका | |
| २. नैषधीयचरित का अभिनव समीक्षात्मक एवं व्याख्यात्मक अध्ययन | [प्रो० शिव<br>डा० | |
| ३. आर्षकाव्य एवं प्रकृति | [डा० कां | |
| ४. नैषधीयचरित-विमर्श | [प्रो०<br>डा० प्रका | |
| ५. नैषधीयचरित : एक अध्ययन | [प्रो० शिव<br>डा० प्रका | |
| ६. वैदेशिकाः गीर्वाण्युपासकाः | [डा० कान्तिकिशो | |
| ७ किरातार्जुनीयम् (प्रथमः सर्गः) | [डा० कृष्णकान्त त्रिप | ४ |
| ८. संस्कृतदिग्दर्शिका-प्रकाश | [डा० प्रकाशमित्र शास्त्री | २.५० |
| ९. संस्कृतपरिचायिका-प्रबोध | [डा० प्रकाशमित्र शास्त्री<br>श्री हरिप्रसाद तिवारी | १.६० |
| १०. संस्कृते नाट्यसौष्ठवम् | [डा० कान्तिकिशोर भरतिया | ६.५० |
| ११. यन्त्र-सर्वस्व के वैमानिकप्रकरण का विवेचनात्मक अध्ययन (शोध-प्रबन्ध) | [डा० प्रकाशमित्र शास्त्री | (प्रेस में) |
| १२. अंशुबोधिनी-विमर्श | [डा० प्रकाशमित्र शास्त्री | (प्रेस में) |


शिक्षक-प्रकाशन १०५/१९४ प्रेमनगर, कानपुर-२०८००१

मुद्रक—साथी प्रेस, १०९/२३५ जवाहर नगर कानपुर-१२